एमनुं जन्मनाम हेमचंद हतुं. एमना पितानुं नाम मगनलाल, मातानुं नाम जमनाबाई अने वडीलबंधुनुं नाम मणीलाल हतुं। एमना पिता मगनलालभाई संसारथी विरक्त हता एमणे बन्ने पुत्रोने दीक्षा अपावी पोते दीक्षा लीधी हती।

हेमचंदभाईए सं. १९४७ मां सौराष्ट्रमां लींबडीशहेरमां आगमशास्त्रना अजोडज्ञाता, वादकलाकुशल गणिवरश्रीजहवेर-सागरजी गुरुमहाराज पासे दीक्षा अंगीकार करी हती, एमनुं नाम 'आनंदसागर' राखवामां आव्युं हतुं। एमनी बुद्धि अत्यंत तीव्र हती एमणे व्याकरण न्याय आदि तेमज आगमोनो अभ्यास कर्यो हतो तेमां तेओ निष्णात थया हता।

पूज्यश्रीए आ सिवाय बीजा सिद्धप्रभाव्याकरण, न्याया-वतारनी टीका विगेरे घणा ग्रंथो रचेला छे, पूज्यश्रीए अनेकहस्त-लिखितप्रतोनुं स्वयं संशोधनकरीने निर्युक्ति भाष्य टीका विगेरेथी सहित तमाम आगमो तेमज सेंकडो शास्त्रोने प्रकाशित कराव्यां छे. पूज्यश्रीए * पाटण आदि अनेकस्थले सात आगमवाचनाओ आपीने श्रमणसंघउपर महान् उपकार कर्यो छे।

पूज्यश्रीने सं. १९७४ मां सूर्यपूरे (सुरतनगरे) पूज्य आचार्य श्री विजयकमलसूरीश्वरजी महाराजे आचार्यपदवीथी अलंकृत कर्या हता. ते शुभ अवसरे सुरतना संघे भव्य महोत्सव कर्यो हतो।

पूज्यश्रीए आगमोने संगेमरमर तथा ताम्रपत्रोमां कोत-रावीने अनुक्रमे सिद्धक्षेत्रमां श्री वर्धमान जैन आगममंदीर अने सूर्यपुरे(सुरतनगरे)श्री वर्धमान ताम्रपत्रागममंदिरमां पधरावीने

---

* सं. १९७१ मां पाटण, सं. १९७२ मां कपडवंज अने अमदावाद, सं. १९७३ मां बे सुरत, सं. १९७६ मां पालीताणा, अने सं. १९७७ मां रतलाम।

सत्तर्कपचेलिमधर्मपान्थिकाधारभूतवृक्षततिप्रभानेकग्रन्थततिम्। तत्र च समासतः सकलकर्त्तव्यमार्गोपदेशकतया प्रतिदिनप्रभातकाल-स्मरणीयाया आरभ्यते विंशिकायाः स्वस्मृतिबीजविवृद्धये किञ्चिद्विवेचनम् । तत्र सुखाववोधाय विहितापरिमितोपकार-प्रवणान्तःकरणः अधिकारसूचिकां प्रथमां विंशिकां चकाणः तस्याश्चेदमादिगाथायुग्मं प्रेक्षावत्प्रवृत्तये मंगलाभिधेयप्रयोज-नादिसूचकमाह–

**नमिऊण वीयरायं, सव्वन्नुं तियसनाहकयपूयं ।**
**जहनायवत्थुवाइं, सिद्धं सिद्धालयं वीरं ॥१॥**

**वुच्छं केइ पयत्थे, लोगिगलोगुत्तरे समासेण ।**
**लोगागमाणुसारा, मंदमइविबोहणट्ठाए ॥२॥ युग्मम् ॥**

इह हि शिष्टे वस्तुनि शिष्टाः कृतमंगलोपचारा एव प्रवर्त्तन्ते ।'रत्नान्यपायवहुलानी' तिन्यायात् शिष्टानां विघ्नवाहुल्य-विघ्नितत्वात् शिष्टानामपि विधीनाम् । न च श्रोतारोऽपि परमार्थ-भूतनिःश्रेयसादिसाधने धर्मश्रवणेऽपि विघ्नाशङ्काप्रतिहतावधानाः श्रवणोद्यताः स्युरिति निबबन्ध मंगलं निबन्धकारः । न चर्तेपि मंगलं शिष्टप्राप्तिश्रोतृश्रवणदर्शनादपार्थकमिदम् । क्वचिद् विघ्नाल्पीयस्त्वेन शिष्टप्राप्तिदर्शनेऽपि निःशङ्कं श्रोतृश्रवणा-दर्शनात् । न च सर्वत्र विघ्नाल्पीयस्त्वं सिद्धं, येन दृष्टाल्पानला-नुदकविध्यापनोपेक्षितमहानलभस्मसात्कृतसर्वस्वमातृशासित इव न शास्त्रश्रवणज्ञानसिद्धिहीना भवेयुः प्रेक्षावन्त आकर्णयितारः । तत्कार्यमेवादौ विशिष्टाध्यवसायोद्भवनिर्जराकारणतया शास्त्र-सम्पूर्णताद्याधायि शिष्यप्रवर्त्तनाय शिष्टताज्ञापनाय च निवन्धनी-यमपि वुद्धिधनेन चेदम् । एवमभिधेयाद्यभिधानस्यापि सफलतोह्या सुधिया स्वधिया । प्रकृतमनुश्रियते । नत्वा वीरं कांश्चित्पदार्थान्

ङ्गीकर्त्तुः अदेशकतामानिनः अपौरुषेयागमस्वीकर्त्तुश्च कुनयस्य व्यवच्छेदः । नहि सर्वज्ञतां निरुणद्धि विरुणद्धि वा वक्तृता । न चर्त्तेऽतीन्द्रियार्थदेशिनमतीन्द्रियपदार्थगोचरं प्रमाणभावमाविशति । असम्भवश्चातिशयेनापौरुषेयीणां वाचाम् । अनेन वागतिशयमाह स्याद्वादिनः । सत्यपि चतुस्त्रिंशत्यतिशयेषु पादत्रिकेण रूपस्थावस्थाविष्करणप्रधानेनातिशयचतुष्कमेव भावार्हन्त्यनिबन्धनं निबद्धं भगवतो वीरस्य । ननु भवत्वाद्यातिशययुग्मस्य क्षायिकत्वेन भावार्हन्त्यनिबन्धनता, अन्त्यद्वयस्य तीर्थकरत्वभाषापर्याप्तिनामकर्मोदयजत्वेन कथं जाघटीति तन्निदानता ? । सत्यं, तत्प्रभवविपाकवेदनकाल एव च भावार्हत्ताऽर्हताम् । यद्वा मिथ्यात्वादिमोहनीयश्रुतावरणीयादिक्षयाङ्गत्वादपरेषामसाधारणसम्यक्त्वादिगुणोत्पादकतया क्षायिकादिहेतुतेत्ति न विरोधः । न चेदं परेषां भवदप्येवंविधम् । साम्प्रतं रूपातीताऽवस्थामधिकृत्याह–'सिद्धं' शेषभवोपग्राहिकर्मचतुष्टयक्षयेण निष्ठितार्थम् । अपुनरावृत्त्या पञ्चमगतिप्राप्त्या जन्मादिदुःखरहितं शाश्वतानन्दधामस्थायिनम् । न हि दग्धे कर्मबीजे भवाङ्कुरोद्गमः सम्भवी, तपोयमनियमादिवैयर्थ्यापत्तेः । मुक्ता अपि 'मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्तापवर्जिता' इति वचसा कैश्चित्सर्वव्यापितयाऽभ्युपगताः । न चायं तेषामभ्युपगमो न्याय्यो, यावच्छरीरं तथाभावे प्रत्यक्षविरोधः, इतरत्र ज्ञानानुत्पत्तेः । शरीरस्य ज्ञानावच्छेदकत्वेऽपि परशरीरादिव्यवस्थाऽनुपपन्नैव । विभुतायां विमुक्ते बाह्याभ्यन्तरे शरीरे न क्रिया, यया व्याप्तिः स्यात् । न च तथास्वभावे मानं किञ्चित् । न च तथाविधः पूर्वप्रयोगोऽप्यस्ति । न च शरीरं परिमाणप्रतिबन्धकं, येन तदभावे स तथा स्यादित्यभिप्रेत्याह–'सिद्धालयं' । सिद्ध्यन्ति स्म-निष्ठितार्था भवन्ति स्म कर्ममलहीना

तुल्यकर्तृकोत्तरकालीन क्रियासापेक्षत्वादुत्तरगाथयोत्तरक्रियामाह – 'वुच्छं' ति । वक्ष्येऽभिधास्ये, अन्तरात्मनि सिद्धत्वेऽपि प्रकरणरूपतया निरूपयिष्यामि । सकर्मकाख्यातस्य कर्मानन्तरीयकत्वादाह "केइ पयत्थे" त्ति । काँश्चिद्, युक्त्याऽऽगमसिद्धा अपि तथाविधसुकुमारमतीनां शास्त्रानभ्यासिनां तदनर्हाणां वाऽज्ञातत्वेन ज्ञानश्रद्धानाचरणयोग्या ये पदार्थाः, पद्यन्ते–गम्यन्ते जीवाद्या अर्था एभिरिति पदानि-समयापेक्षयैकार्थनिरूपकश्रुतभागास्तेषामर्था–अभिधेयाः सम्बद्धासम्बद्धरूपास्तान्, यद्वा–पदार्था लोकाद्यवस्थानिश्चित्यादयो लोकोत्तराः, आवेणिकादयो लौकिकाः प्रतिपाद्या अर्थाः पदार्था वस्तूनीतिकृत्वा तान् । इदं च जिनवचनमहोदधेरशक्यसङ्ग्रहतां मन्वानोऽपि एकाद्यपि महोपकारकर्तृ जिनवचः, सामायिकमात्रपदप्रभवानन्ताऽऽनन्दपदप्राप्तिप्रतिपादकपारमर्षप्रामाण्यादिति कतिचित्तदुद्धारोऽपि श्रेयसे इति ज्ञापनपरं पदद्वयम् । कीदृशाँस्तान् लौकिकलोकोत्तरान् । लोके–परमर्षिप्रतिपादिताऽऽगमनिरपेक्षप्रवृत्तिपरायणे सामान्यजने भवा लौकिका, लोकोत्तराः-अतीतदोषतालब्धानन्तज्ञानपुरुषविशेषप्रतिपादिताऽऽगमसिद्धास्तेषां लोकस्वभावादीनामबाधितवाक्यप्र–तिपादितत्वाल्लोकोत्तमता विद्यत एवेति लोकोत्तरास्तान् । समाधास्यति च लौकिकपदार्थप्रतिपादनायोग्यताशङ्कां स्वयमेव सूत्रकारः सूरिः सूत्रेऽग्रे । तेन नात्र तच्चसूर्या । न च लोकागमसिद्धत्वेन तादृक्पदार्थप्रतिपादनं सफलप्रवृत्तिव्याप्तप्रेक्षावत्ताञ्चितनरोचितमित्याहाऽस्य सफलतां-'समासेन'–सङ्क्षेपेण । सन्ति हि विचित्राः श्रोतृरुचयो, येन सङ्क्षिप्याभिधानं फलवत् । यद्वेदानींतनजनानां तादृङ्मेधायुर्बलधारणावर्जितानां नानीदृशेन सम्पद्यते बोध इत्युचितोऽयं सङ्क्षेपप्रयासः । नच स्वमनीषाशिल्पिनिर्मितं ग्राह्यतामेति किञ्चिदपि लोके लोकोत्तरे वा, सुनिश्चितासम्भव-

धर्म-तत् फलमोक्षाऽन्यपदार्थनिःस्पृहो, 'मोक्षायैव तु घटते विशिष्ट-मतिरुत्तमः पुरुष' इत्याप्तोक्तेः। न चान्तर्गडुनैतद्गाथायुगलान्त-र्गतेनाभिधेयादिन्यासेन (न) प्रयोजनं, यावता सति तादृश्याभिधेय-प्रभृतौ तत एव बोधादसति च नाभिधेयप्रभृतिन्यासमात्रेण सिद्धि-रितिवाच्यम्। संशयस्यापि प्रवृत्तिजनकत्वादुपादीयते चापोह्या-दिनापि तत्तच्छास्त्रादावभिधेयादिसूचकं वाच्यम्। अधिकार्युल्ला-सनायेति केचित्, नान्यथाऽऽमूलाच्छ्रवणमननावधानता तेषामिति-गाथायुगलार्थः।

लौकिकलोकोत्तरपदार्थव्युत्पादने लोकागमानुसारात्प्रतिज्ञाते शङ्कते–यद् आगमानुसारेण लोकोत्तरपदार्थव्युत्पादनं न्याय्यं, लोकोत्तराणां परं 'लोकसञ्ज्ञां परित्यज्ये' तिवचनाल्लौकिक-पदार्थव्युत्पादनं न घटामञ्चत्यञ्चितक्रमस्य भगवत इति। अत्राह–

**सुंदरमिइ अन्नेहि वि, भणियं च कयं च किंचि वत्थुंति ।**
**अन्नेहि वि भणियव्वं, कायव्वं चेति मग्गो यं ॥३॥**

अन्यैरपि–आप्तोदितागमाननुसारिभिरपि, अपिनाऽऽस्तां तावत्सम्यग्दर्शनादिपूतात्मभिर्भणितं कृतं च। व्यवस्थायां चेदपिः, तदागमानपेक्षयापि स्वबुद्धिकल्पनया यद् व्यवहारादि अविरोध्या-गमादिनेति ज्ञेयं। भणितं–व्यवहारप्रधाने शास्त्रे निर्दशितं, चकारेण न केवलं निर्दशितं किन्तु युक्त्या गुणकारणतया व्यव-स्थापितमपि, कृतं च–तत् तथाविधभणितिभणितमेवाचीर्णं क्रियया निष्पादितं, चकारेण कारितं प्रशंसितं चेति द्वयोर्ग्रहणम्। यद्वा चकारद्वयेन लौकिकोक्तिकृत्योर्देशकालादिभेदेन वैचित्र्यमाह। जायत एव देशकालादिभेदोऽवस्थावदामयावि–भोगभेदे आचार-वैचित्र्ये हेतुः। तादृशैर्भणितं कृतं च यदि सर्वज्ञवाङ्मयानुसारि-विहितं स्यादित्याशङ्क्याह–किञ्चिदपि–चित्प्रत्ययस्य सामान्यार्थ-

सुन्दरता। ननु दध्यानयननोदनया दध्याधारानयनवत् लौकिकानुष्ठानप्रामाण्ये लौकिकमार्गप्रामाण्यापत्तौ लोकोत्तरमार्गव्यवच्छेद इति चेदाह-'इति मग्गो यं' ति। अयमेव लोकोत्तरो मार्गो–यदुतान्यैरपि विहितं यत्सुन्दरं, तद्गुणितव्यमाचरणीयं च, न लोकविहितत्वमात्रेण परिहर्त्तव्यं, किन्तु यदसुन्दरं तद्धेयं, यत्तु सुन्दरं तद् ग्राह्यं। इतिः हेतौ। अतो लोकोत्तरागमानुसारिपदार्थप्रतिपादनपरायणेनापि मया लोकानुसारादपि पदार्थप्ररूपणं प्रतिज्ञायते। नहि शिष्टमार्गप्रवृत्तः प्राप्नोति पातं कदाचिदपि गुणश्रेणेस्तदपहाय प्रवृत्तस्यैव गुणगणविशरारुता-प्राप्तभवचक्रदारिन्ध्यभावानुगमात् ॥३॥

एवं कृतेपि समाधाने दृढीकृतेऽपि सुन्दरलौकिकविधेर्विधेयत्वे ये केचिदनाकलय्याऽऽयतिं लौकिकत्वमेव परिहारे बीजमवबुद्ध्य लौकिकपदार्थानभिधाने एव कृताग्रहा नानुमन्यन्ते पूर्वक्तां युक्ति ताञ्शिक्षयितुमाहाऽऽचार्यवर्यः–

**इहरा उ कुसलभणिईण चिट्ठियाणं च इत्थ वुच्छेओ।**
**एवं खलु धम्मो वि हु सव्वेण कओ न कायव्वो ॥४॥**

इतरथा–पूर्वगाथोक्तप्रकारानभ्युपगमे सुन्दरत्वेन नोपादेयं, किन्तु लौकिकत्वेन हेयमेवेत्येवमङ्गीक्रियमाणे इतियावत्। तुर्विशेषणे। एकस्तावन् मार्गविरोधः पूर्वोक्तोऽपरं चेदमितिविशेषणाय। किमित्याह-'कुसलभणिईण' कुशलाश्च ता भणितयः कुशलभणितयस्तासां–व्यावहारिकानेकगुणगणप्रकटनप्रभविष्णुसामाद्यनेकनीतिविवेचनविचक्षणवाचां, यद्वा-कुशलानां-अलब्धसम्यक्त्वानामपि माध्यस्थ्येन योगाचार्यादिवद्यथार्थवस्तुविचारविवर्त्तिनां भणितीनां–वृत्तिनिरोधनिदानाभ्यासवैराग्ययमनियमादिवाक्यानां।

तीयमिति भवदनुयायिभिर्भवद्भिश्च न कार्य एवासावपि। तथात्र लोकव्यवहारोपयोग्यावेणिकादित्यागेन लोकव्यवहारबहिर्वर्तिता धर्मादिव्युत्सर्गेण च पुण्यशम्बलशून्यता च देवानांप्रियानामिति हा! कदाग्रहग्रहिलताफलानुभवभावुकताऽनुचिता भवादृशां, सम्पन्नश्चाजामपनयतः क्रमेलकप्रवेश इतिन्यायः। यदि चोच्येत भवद्भिर्यदनादिकालीनमोहमहामलिम्लुचमुषितमहार्घ्यज्ञानाद्यसपत्नरत्न-प्रापणप्रवणतया आपातपरिणामरम्यो धर्मः किमिति परिह्रियते? न खलु चिन्तामणिर्गृहीतो (तमुक्तः) नरापसदेन केनापीति तत्प्रभावो न विद्वद्वृन्दवर्णनीयो, नवा तदङ्गीकारकर्त्ता न वर्ण्यते वर्णनाशालिभिः सूरिभिस्तदायाता भुजङ्गमनलिकान्यायेनाप्यस्मदुक्तं सुन्दरत्वाल्लौकिकमपि ग्राह्यमेव विचक्षणैर्विशदमिति रुचिरः मार्गः। आनन्दोऽयं महानस्माकं यद्भवादृशां महिमवन्मार्गावतार इति ॥४॥

एवं लौकिकपदार्थप्रदर्शनविषये विहिते समाधानेऽन्य आशातनार्थमजानानाः सम्यग् ग्रन्थस्यैव प्रस्तुतस्य महापुरुषाशातनाभीरुभिरकर्त्तव्यतां प्रतिजानानाः स्वकमत्या कर्त्तव्यकार्यमेतदन्यदुपदर्शयन्त आहुः –

अन्ने आसायणाऽओ महाणुभावाण पुरिससीहाणं ।
तम्हा सत्तणुरूवं पुरिसेण हिए पयइयव्वं ॥५॥

अन्ये–पूर्वोक्तवादिनो भिन्नाः, यद्वा–यथार्थहिताऽऽशातनास्वरूपानभिज्ञतया यथावच्छ्रद्धानशून्याः केचन भणन्तीति वाक्यशेषः। किमित्याह–'आसायणा' आ-अभिविधिना, शात्यते-विनाश्यते, ज्ञानाद्यात्मस्वरूपं मोक्षमार्गो वाऽऽत्मोन्नतिविघ्नकरणेन यया साऽऽशातना मानहानिर्भक्त्यन्तरायो वा। कुत इति चेदाह–

ज्ञातसमयसद्भावानां कार्यं एतादृशेऽनन्तभ्रमणनिबन्धने युक्तो यत्नो, लाभमिच्छतो नीविहान्यापत्तेः। किं कार्यं तर्हि ज्ञाताऽऽगमसतत्त्वैर्मुमुक्षुभिरित्याह–"तम्हा" यस्मात् सङ्क्षेपेणापि परमपुरुषप्रणीतसिद्धान्तानुसारादपि नूत्नाऽविगीतग्रन्थग्रथने तत्प्रणेतृजनाशातनाया दुरन्तापारावारदुःखपारावारभवभ्रमणभावो भवति, ततो हेतोः "सत्तणुरूवं" शक्ति-प्रशस्ताध्यवसायजातवीर्यान्तरायादिक्षयोपशमसमुत्थात्मसामर्थ्यमनतिक्रम्य, तदतिक्रमणे हि महान्प्रत्यपायः, यथावीर्यमाराधनैव फलवती ज्ञानादीनामन्यथा तु विधानेपि यथाकथञ्चिन्न तथा फलप्राप्तिः, परिणामवृद्ध्यनुगुणा हि सम्पद्वृद्धिः। न च भवति वीर्यगोपकस्य तथाभूता सेति, अतिक्रम्यापि तां प्रवर्त्तते चेल्लभते पातमेव। नहि मनोमात्रेण शारीरिकसम्पत्सम्भवोऽभावे च तस्याः प्रतिज्ञातपरिहारेणार्त्तादिध्यानोद्भूतेर्वा महाननर्थप्रसरः समुद्रोत्तरणक्षममरालतरप्रेक्षणाविचारित–निजसामर्थ्यजलकल्लोलमालामालिपारावारपारप्रापणप्रवृत्तध्वाङ्क्षवत् जिनकल्पश्रवणमात्रजाताऽविचारितसामर्थ्यप्राचीनानल्पकूटक्रोधविकारप्रेरितनग्नाटगुरुजिनकल्पाङ्गीकृतिरिव वा। न चासौ हितकृदात्मने कथञ्चिदपीति शक्त्यनुरूपमित्युच्यते। क्रियाविशेषणमिदम्। तथा च नपुंस्त्वं द्वितीया च। किमित्याह–'प्रयतितव्यं' यत्नो विधेयः, न केवलं विचारमालामालिनाऽवबोधमात्रवता वा भाव्यं, किन्तु पुरुषकारोऽपि कार्यः। उपादानकारणज्ञानचिकीर्षाप्रयत्नविघ्नजयादिभिरेव कार्यसिद्धेः। केनेति चेदाह–'पुरिसेणि'त्ति। पुरुषेण, पुरुषकथनं च तेषामतिशयेन प्राधान्यताख्यापनार्थं, पुरुषज्येष्ठो धर्मं इति कृत्वा प्रतिपादितं चाऽऽगमेऽपि पुरुषप्राधान्यम्-'वरिससयदिक्खियाए अज्जाए अज्जदिक्खिओ साहू' इत्यादिना। न चानेन स्त्रियां हित उद्यमोऽविधेयः, तासामपि पुरुषवत्सम्यक्त्वज्ञानचारित्रशालितया निर्वात-

करणतावाप्ततीर्थकृत्कर्मफलभूता। क्रियते च तैर्वोभूयन्ते च कुनय
न चाकरणीयता, शुभाशयप्रवृत्तशुभप्रवृत्यात्मकत्वात्तस्याः। न
'स्वार्थभ्रंशो हि मूर्खते' तिवत्स्वहितं विहाय सा क्रियमाणा कार्य
करी,न च क्रियते इत्याह-'ससत्तिउ' त्ति। स्वशक्तितः। पञ्चम्य स्त
आद्यादेराकृतिगणत्वात्पञ्चमी च 'गम्ययपः कर्माधारे' (सि० २।२।
इत्यनेन। तथा च दुःषमारजनीप्रचारपटुतालब्धप्रबलप्रभावाय
अवसर्पिण्या दोषेण यद्यपि तथाविधा क्षपकश्रेण्यादियोग्याध्यवसा
यवज्रर्षभनाराचादिसंहननाभावेन यावती स्वकीया शक्तिस्ताम
नतिक्रम्य। एतदेव हि पार्श्वस्थवकुशत्वयोर्भेदकत्वं,यदाद्योऽकारणप्र
तिसेवाविधानविधुरो, न च प्रायश्चित्तादिप्रतिपत्तिभावुकः। इतरस्
न तथा, किन्तु यावच्छक्ति प्रतिसेवापरिहारपरः, कृतायां च
कारणे तस्यामवश्यं यथायोगमालोचनादिविधाता। अनेन न
केवलं उपदेशप्रदानमेवास्माभिः श्रेयस्करनिःश्रेयसप्रापकतयाऽभ्यु
पगतं हितविषयकप्रवृत्तिविरहेण, किन्तु परप्रबोधनवत् स्वात्म-
हितचिकीर्षुतया यथाशक्तिप्रवृत्तिरपि हितविषया। तामाश्रित्य
किमित्याह—'कुसलसेवणाओ य' त्ति। कुशलो—मोक्षस्तस्यैव
निखिलानिष्टनिर्गतत्वेन कश्मललेशेनाप्यकलङ्कितत्वात् केवल-
सुखरूपतासम्पत्तिसम्पत्तेः, तत्प्रापकं तत्प्रतिबन्धपराकरणपटिष्ठ
वा सम्यग्दर्शनज्ञानचारित्राद्यनुष्ठानमपि 'कारणे कार्योपचारात्
कुशलमेव, यद्वा—पदैकदेशे पदसमुदायोपचारात्कुशलपदेन कुशला-
नुष्ठानमेव ग्राह्यम्। नहि भवति सशरीराणां मोक्षभावत्वं,
कुशलानुष्ठानं स्यादेव चरमपुद्गलावर्तीनजन्तूनां लघुकर्मणामिति।
तस्य सेवना-द्रव्यक्षेत्रकालभावानुरूप्येणाऽऽचरणा, तस्याः। अनेना-
हैतद्यदुत-यः स्वयमशुभसमाचारः,केवलं नटवत्परोपदेशमात्रप्रवीणो,
नासावुपदेशदातृपदवीमर्हत्याऽऽर्हतीम्। प्रपञ्चितं चैतत् 'स्वयं

इति पारमार्षवचनानुसारेण प्रज्ञापनां कुर्वतः स्वस्याविराधकतां ज्ञापयति । भवति च स्वमनीषिकयोच्यमानं भव्यानां भववृद्धयेऽनन्तजिनवरकेवलिपरमप्रभावकागमाशातनाप्रसक्तेरुक्तं चैतत्स्पष्टं श्रीभगवत्यां मट्टुकाख्याने श्रीमता चरमतीर्थाधिपेन । 'श्रुतादि'त्यनेनैतदाह-यदुत-परलोकविधौ मानतयाभिमतमपि वचनं न यस्य कस्यचित्, किन्तु अतीन्द्रियार्थवेदनविज्ञपुरुषस्यैव । न च श्रुतसामान्यादेव उद्धारे प्रतिज्ञायमाने कथं कषच्छेदतापशुद्धागमरूपादनवाग्दर्शिदृब्धादुद्धारप्रतिज्ञाऽवगम्यतेऽधिजिगांसुभिरितिवाच्यम् । सामान्यशब्दा अपि वक्त्रादिवैशिष्टयाद्विशिष्टार्थप्रतिपादकतया प्रतिपद्यन्त एव लोके शास्त्रेऽपि च । यद्वा-'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मितिन्यायान्न श्रुतशब्दार्थसन्देहमात्राद् व्याहतताऽस्य, किन्तु ग्रन्थारम्भकृतनमस्कारविषयनिखिलार्थविलोकनालम्भविष्णु–श्रीजिनवरेन्द्रवाक्यरूपादेव श्रुतादिति विशेषप्रतिपत्तिः कर्त्तव्या । यतः श्रुतादेवोद्धारस्ततः किमित्याह–'न उ' इत्यादि । एवं क्रियमाणे तस्य–भगवतः श्रुतस्यातिमहतोऽतिमहाविषयस्य निर्युक्तिभाष्यादिरपि सर्वथाऽनुन्मुकुलितस्य, व्युच्छेदोऽभावः पठनपाठनाद्यभावेन पूर्वपक्षोक्तनीतिना प्रतिपादितस्तत्तद्ग्रन्थाभ्यासकाले पठनाद्यभावेऽपि द्रव्यतो भावतस्तद्वाच्यार्थप्रतिपत्तेः । न हि शब्दमात्रे तात्पर्यं, प्रयोजनं तु यथाश्रुतेनार्थप्रत्यायनं, तदेवानेनापि । तथा अकृते चोद्धारे नैदंयुगीनास्तथाविधधारणादिहीनास्तत्प्रथमतो निर्मुद्रसमुद्रप्रतरणप्रयासमुररीक्रियेरन् । अभ्यस्तग्रन्थतया अवगतपदार्थतत्त्वतत्प्रतिपादनपद्धतयश्च सुखमवतीर्युर्धारणादिसमुल्लसितमानसाश्च विशेषतरमुपयुक्ताः स्युः तरणविततव्यायामितनरागाधसमुद्रतीर्थतरणवत् । एवं श्रुताऽव्युच्छेदमभिधाय पूर्वपक्षानुक्तश्रुतव्यवच्छेदाख्यं दूषणं समाहितम् ।

सति तद्दर्शने आनन्दोत्कर्षे । सम्भवति चानधिगततथाविधानल्प ग्रन्थानामल्पग्रन्थेन महतीं व्युत्पत्तिमुपलभ्यागाधग्रन्थरत्नाकररत्न समीहया बुद्धियानेनाऽतिनिबिडेन तत्रापि परिपूर्णप्रज्ञापनीयार्थ प्रज्ञापनपटुनि श्रुते करोत्यवगाहनम् । तत्र तद्देशदर्शनमयीवितर्क किन्तु सुतरां बालादीनामुपकारायेति निर्जरायै स्वस्याऽन्येषां च न चैवमाशातनाकणोऽप्युद्धारकस्याधिकाराणां, किन्तु स्तवनादिक रणवत् साहाय्यकर्तृवद्वाऽत्यदभ्रोदर्कसमागमः । तयाच तदर्थिनामि कर्त्तव्यम् । नहि यो यदर्थी स तदुपायेऽलसः स्याद् । भव्यानां तत्त च्छ्रुतोदीरितार्थबोधमेनानल्पार्थरत्नरोहणाचलजिनमहोदध्यवगा- हनार्थिनश्च सूरय इति योयुजीत्येव तेषामयमायासः स्वपरानु ग्रहनिपुणः ॥७॥

एवमुद्धारस्य कर्तव्यतां प्रतिपाद्यापि पूर्वपक्षगूढाभिप्राय मुद्‌घट्टयन्नाह–

**इक्को उण इह दोसो जं जायइ खलजणस्स पीडत्ति ।**
**तहवि पयट्टो इत्थं दट्ठुं सुयणाण संतोसं ॥८॥**

एक एव, नान्यः कश्चन वक्ष्यमाणलक्षणाद् । 'पुन'रसूयोद्भा- वने। श्रूयतां तावत् सभ्याः तत्त्वपरीक्षाकषपट्टा यदुत-उपक्रम्यमाणे प्रस्तुतशास्त्रेऽयं वादी महापुरुषाणामाशातनापदेशेन तावत् प्रत्यति- ष्ठत यावत् केनाप्यंशेन गूढाभिप्रायिककार्यसिद्धिसम्भवो नास- म्भवाघ्रातो, दृष्ट्वा तु तं तथाविधं मलिनास्यतया गूढाभिप्रायं सर्वेषामाविष्करोतीङ्गिताकारैरिदमत्र गूढतत्त्वं, यत् केनापि क्वचिदपि दुर्गमे शङ्कोद्भवो विहितस्तत्प्रतिकृतिश्च चेद्विहिता, तथापि न चेत् पर्यनुयोजकस्य स्वास्थ्यं, न च तत्रापि सन्देहोद्भवः, केवलं विच्छायवदनेन पलायनेच्छादर्शकनेत्रविभ्रमस्तदा स्पष्टं ज्ञायते-यन्नैष तत्त्वाधिजिगांसुतयाऽऽरेकादि व्यधात् किन्तु परोत्कर्ष-

दवश्यम्भाविनः कर्मबन्धस्य कुशलानुबन्धितामनवद्यतां च क्रियादित्युपदिश्यते उपदेशविधिनिपुणेन निपुणेन 'सविशेषणे ही' तिन्यायादनवद्यतायामेव विश्रामाद् । बन्धस्तु अनूद्यते,न विधीयते न वा प्रशस्यते । यद्वाऽस्तु सोऽपि प्रशंसास्पदं, क्षयोपशमजन्यदानादि-प्रादुर्भूतपुण्यप्रचयप्राप्तवैराग्यमार्गाविघातकपरिवारर्द्धिरूपानुत्तरा-मरत्वादिवत्, तीर्थकृत्त्ववद्वा कुशलपदवाच्यमोक्षानुसारित्वाद् । दुःखस्याप्येवंविधत्वसम्भवश्चेदन्यदेतत्, प्रायिकं व्यवहारानुगतमेव च व्याख्यायतेऽत्र । यद्वा-तत्र सज्जनसन्तोषादपि च यत् कुशलं विवक्षासद्भावेऽपि वचनगोचरातीतं नत्तं च मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन्' (तत्त्वार्थ०) इतिवाक्यात् परमपदपथ-प्रगुणप्रवृत्तिभावादवश्यम्भावि तथाविधं कुशलं कुशलानुबन्धि ग्रन्थ-कारकस्य । अत्र पक्षेऽपिना 'वक्तुस्त्वेकान्ततो भवति' अत्र धर्म इति शेष इति परममुनिवचनप्रामाण्याद् ग्रन्थारम्भकाले शुभा-ध्यवसायाद् ग्रन्थकरणाऽनेहसि चोपकारादिधिया अस्त्येव कुशलप्राप्तिः तथाप्युपकारसम्भवे च कुशलप्राप्तिर्महतीयमिति-ज्ञाप्यते । ततः किमित्याह- 'तत्तो' इत्यादिना । उद्धृतप्रकरणजात-सज्जनातिसन्तोषप्रभवात् कुशलात् । यद्वा—लघुप्रयत्नलभ्यग्रन्थार्थ-बोधप्रादुर्भूतोपादेयादियोग्यप्रवृत्त्या झटिति कुशलानुष्ठानावाप्ति-र्निर्मलता चात्मपरिणतेः सविशेषं या भवति, तद्रूपात् कतिचिद्दु-र्जनत्यक्तदौर्जन्यजातसुजनताप्रभवकुशलाद्वा तेषामपि सामान्येन खलानामवशिष्टानां वा अपिना सज्जनजनगुणोत्पत्तेः कतिचिद्-दुर्जनानां सौविहित्याच्च फलवत्त्वेन आयबहुलत्वमेवोद्धारक्रियाया यद्यप्यस्ति, तथापि प्रोच्यमानवचनज्ञापितकुशलप्रभावेनापहृते दुर्जनातिकृच्छ्रे कष्टे एकान्तभद्रभावोद्भवनभावुकतैव ज्ञेयेति दर्श-यति । यद्वा-भिन्नक्रमोऽपिः । तेन तुल्याऽऽयव्ययताकारिका पीडाऽपि

शयकल्पदीक्षामात्रदानकेवलसत्यङ्कारकरणप्रवणकरुणाकरभगव-च्छ्रीगौतमस्वामिवचनानुगक्रियाकलापाकलनाद् ननाशैव पीडा काकनाशम् । इति नोक्तं किञ्चिदपि अतिशयोक्तियुक्तमभियुक्तैः 'यत्सज्जनकुशलाद् दुर्जनानामपि भविष्यति पीडानाश' इति सम्भवत्येवंविधे दुर्जनानां पीडाया अपहारे, यदि कदाचिन्न भविष्यति तथाविधानां केषाञ्चिद् निकाचितकर्माविकचितचैतन्यानां स,तदा दुरनुबन्धोद्धारोऽयं समुद्धारः प्रकरणस्येति चेदाह- 'सुद्धासये' त्यादिना समाधानविधिं समाहितान्तःकरणेन । शुद्धः-परापकर्षाऽऽत्मोत्कर्ष- ख्याति - पूजा - परिवाराद्याशंसारहितः, आशयो-मनःपरिणामोऽध्यवसाय इतियावत् शुद्धाशयः, तस्मात् 'गम्ययपः कर्माधारे' (सिद्धहेम० २।२।७४) इतिपञ्चमीविधानात्, निर्मलाध्यवसायप्रयोज्या प्रवृत्तिः उद्धारदेशनाप्रभावनादिका क्रिया । यद्वा-शुद्धः आशयो यस्यां सा शुद्धाशया । पूर्वं स्वपरोपकारबुद्धिमत्त्वात् मध्येऽनाशंसादेः अन्ते आत्मानुत्कर्षादेः प्रवृत्तेः शुद्धाशयत्वम् । तादृशी प्रवृत्तिर्निर्दोषिका ।भावेऽपि दुर्जनानां स्वकपोलकल्पनाकल्पिताकल्पविचारश्रेण्युद्भावितपीडालक्षणदोषस्य, पूर्वोक्ता प्रवृत्तिर्न तेन दुष्टा, दुष्टादुष्टत्वनिबन्धनत्वादध्यवसायस्यैव । दृष्टश्चायं न्यायः शास्त्रे यदुत-ईर्यासमितसाधुसङ्क्रामितक्रमन्यग्भागाऽऽगताङ्गिविनाशे नाप्रमत्तत्वात्तस्य सूक्ष्मोपि बन्धः । तदेवमत्रापि भावनीय भावद्भिर्भवद्भिः । न च शुभाशयस्य निर्दोषताऽत्रैव विश्राम्यति, यावदसत्पदार्थश्रद्धानेऽपि न व्याहतिः सम्यग्दर्शनस्व स्यात्, स्याच्चेत् शुद्धाशयवतो गुरुभिस्तथोपदिष्टमलक्ष्यमाणकदाग्रहैः उपदिष्टं वा यथार्थमनाभोगतोऽन्यथा श्रद्धावतोऽपि । यद्वा-अलमन्येन यावदशेषजन्तुजीवातुकल्पदेशनाविधानपटुतीर्थंकृतामपि देशना भवत्येव-असमशूलायाऽभव्यत्वरुजार्दितचेतनानामभव्यानाम् । यदाहुः पूज्या

बोहिनाशो अणंतसंसारो' त्ति वाक्यात् पर्यटत्येव अनाद्यनवदग्रे संसारकान्तारेऽशरणा नष्टबोधिका गोष्ठामाहिलादिवद् उत्सूत्रभापका: तथाप्यभिनिवेशाद्युद्भूतस्यैव तस्य तथाफलत्वम् । अनाभोगत: सहसात्काराद्वा जातस्य तु तस्य मिथ्यादुष्कृतनिकृतिमात्रपर्यवसानाद् । अन्यथा भगवतो गौतमस्वामिनोऽपि न चरमशरीरिता चरमशरीरवर्णनीया सम्भावनापथमियृयात् । भवस्याऽनाग्रहादिना च तिरस्कृतत्वादेतद्दोषस्य । अत एव 'विश्रृंखलापि वाग्वृत्ति:, श्रद्दधानस्य शोभत' (वीतरागस्तव:) इति प्रघोषो महर्षिपरम्परया । प्रतिक्रमणसूत्रेऽपि प्रतिदिनपापप्रक्षालनप्रवणेऽपि 'उस्सुत्तो उम्मग्गो' इत्यादिना अनाभोगविधानस्यैव तथा प्रायश्चित्तोपदेश: । अलमतिप्रसङ्गेन ॥९॥

ननु यद्यपि शास्त्रे शुद्धाशयप्रभवप्रवृत्तेर्निर्दोषताऽऽम्नाता आम्नायैदम्पर्यवेदिभिरभियुक्तै:, तथापि तत् 'सिद्धस्य गतिश्चिन्तनीये'ति न्यायात् जातकथञ्चिद्दोषभावस्य पुनर्विध्याद्युद्यमोल्लासाय 'जिनोक्तमिति सद्भक्त्या, ग्रहणे द्रव्यतोऽप्यद: । वाध्यमानं भवेद्भावप्रत्याख्यानस्य कारण' ॥१॥ (अष्टके) मित्यादिवत् नतु प्रथमत: प्रवृत्त्यर्थमिति चेदाह–

**इहरा छउमत्थेणं पढमं न कयाइ कुसलमग्गंमि ।**
**इत्थं पयट्टियव्वं सम्मंति कयं पसंगेणं ॥ १० ॥**

इतरथा-उत्सूत्रदोपसम्भावनामात्रेण सन्मार्गाऽप्रवृत्तौ, यद्वा–कथञ्चिदनिवर्तमानखलदोपदुष्टतासम्भवेन सन्मार्गप्रवृत्तिप्रतिबन्धकताया न्याय्यत्वे। नहि गरुत्मतां गतं पन्थानं वीक्ष्याऽपरपतत्रिणा तत्र गमनंन विधेयं, नवा विततच्छदविहङ्गमवर्यस्यापारविष्णुपदयानमवधार्य विहगेन तथा कार्यं योग्यतामञ्चेत्, येन

शंसया मानसानन्दितमरालग्रहो न कार्य इति । ननु शास्त्रे यदि छद्मस्थानां देशनादिविधानं प्रत्यपादि, प्राप्नोति च तत्कारी परमपदमपि परम्परया, तर्हि तदेव कार्यं कार्याकार्यविचक्षणैर-क्षुण्णविश्रमैः सर्वैर्वा मुमुक्षुभिः । करणे च तथा बालादिविचारणं नार्हत्येव अर्हदुदितापि परिषदि वर्ण्यमाना वर्णनालेशमिति चेदाह-'सम्मं'ति । सम्यग्-अविपर्ययेण,तत्प्रकृत्यभिमुक्त्यादि-बालादिज्ञानेन सञ्जाते चोत्सर्गापवाद-तदुभय-भय-वर्णनाद्यनेकप्रकारसूत्रसर्वस्व-सेवधिलाभे द्रव्याद्यपेक्षयैव च । अनेन अन्यथा प्रवृत्तस्योत्सूत्रभाषितां सूत्रयति । न वैतत्कल्पनाकल्पितं, यदाहुः प्रकरणकारपादा एव

'पापं खलु देशना परस्थाने उन्मार्गनयनमेतद्भवगहने दारुणविपाक' (षोडशके) मित्यादिना । भाष्यकारा अप्याहुरेतदेव १ 'पगप्पजइणा कहेयव्वो'त्तिवचनेन । अत एव च सत्पथोपदेशिनामपि सागरचन्द्राऽऽचार्याणां श्रीमन्मुनिचन्द्राऽऽचार्यप्रवरभागिनेयानामनन्तसंसारसंसृतिः सूत्रोक्ता सङ्गच्छते । नहि तैरसत्यं देशितं, किन्त्वसमीक्ष्य पर्षदाद्येव केवलमुपदिष्टं, जातश्च श्रोतॄणां प्रत्युत विपरिणामः शासनद्वेषश्च । सत्युपाये चाऽप्रमत्तेन शास्त्रार्थोऽवश्यमेव कार्यः प्राप्तुकामेन पारगततां तथा, यथा नाऽन्येषां कुगतिनिमित्तं स्वयं भवतीत्यलं क्षुण्णाचारक्षुण्णात्मभिः प्रसङ्गेनेत्याह सूरिवर्योऽपि- 'कयं पसंगेणं'ति । प्रसङ्गेन अतिकुटिलगति-कर्मपरवन्मनुष्यैर्विवेकवर्जितैर्निष्फलवादविवादरूपेण कृतं-पर्याप्तम् । न खलु उलूकोद्दीप्त्यै दीपनीयं दिननाथेनेति । एतावता सेवित-गुरुकुलपरिदृष्टसमयेन स्वशक्तिकुशलानुष्ठानानुष्ठानस्थितिमता पूर्वपुरुषश्रुतातिशयादिनिरीक्षणादिसञ्जाततद्विषयकबहुमानेन श्रुते दृष्टाधिकाराणामुद्धाराय श्रुतोक्तिश्रवणकौतुकोत्पादानुकूलमुद्धरणीयं सम्यक् छद्मस्थेनापीति सिद्धम् । अथ प्रकृतमनुसरन् श्रोतृ-

---

१ प्रकल्पयतिना कथयितव्यः ।

नादिप्रायः । यद्वा-न वर्णसङ्करप्रजानां संस्काररहितत्वाज्जायन्ते विनयादयो गुणाः,न च तानृते औचित्याचरणं धर्मयोग्यता च स्यादिति कुलनीतिनिरूपणा फलवत्येव । न केवलैव कुलनीतिः, किन्तु लोकधर्माः । अत्र लोक्यते-अपेक्ष्यते, व्यवहारवृत्त्यै विवेकिभिर्यः स लोकः– व्यवहारवेदिनो जनाः। अपेक्ष्यते च लोकः साधुभिरपि, येन तद्विरुद्धानां द्यूतादीनां जुगुप्सितकुलभिक्षादीनां च त्याग उपदिश्यते, क्रियतेऽपि च । यदाह् –

लोकः खल्वाधारः, सर्वेषां ब्रह्मचारिणां यस्मात् । तस्माल्लोकविरुद्धं, धर्मविरुद्धं च संत्याज्य ॥१॥ मिति लोकसञ्ज्ञापरिहारोपदेशस्तु मिथ्यादृग्लोकविहितकुशास्त्रानुसार्यनुष्ठानत्यागापेक्षः, नान्यथा । अवदिष्यदाचार्यः 'अदेशाकालयोश्चर्यां, त्यजन् जानन् वलाबलं । प्रसिद्धं च देशाचारं समाचरन्नि' त्यादि । न चैतद् गृहस्थधर्मापेक्षमिति नालम्बनीयमाकाशवत् निरालम्बनैर्यतिधर्मावलम्बनैरिति । तत्त्यागानुपदेशात् तेषां विशेषतो गणधारिभिः तस्य संयमनिश्रास्थानतया प्रतिपादनात् पूर्वत्र च ब्रह्मचारिशब्देन अनूनापूर्वपूर्वविशारदेन साधूनामेवाभिधानाच्च तेषामपि तदालम्बनान्यथानुपपत्तेः(तदालम्बनाविनाभावित्वात्) संयमस्येति । तस्य धर्माः- सदाचारा लोकधर्माः, पश्चाद् द्वन्द्वे कुलनीतिलोकधर्माः । न च पृथगधिकारत्वाद् विंशिका पृथक्कार्येति । तयोरेकरूपत्वेन लौकिकत्वेन चैकस्यां समावेश एवोचितः । न च प्रसिद्धत्वाल्लोकलज्जादिनापि तत्परिपालनभावाच्च तत्र वहुवक्तव्यमस्ति, येन पृथगधिकारो विंशिका वा क्रियेत । अत्र उभयोच्चारणं तु द्वयोः पार्थक्यावबोधाय । यतः सन्त्यनेके एवंविधा अपि अनभिज्ञा वस्तुस्वरूपस्य, यल्लौकिकं वंश्यं लोकोत्तरं च न भिन्नतया प्रतीयन्ते, तदुपकाराय चैवमेकविंशिका–प्रतिपाद्यत्वेऽपि न्यस्तावधिकाराधिकारे पृथक्तयेति ।

सङ्ख्यासङ्ख्येया एव कथ्यन्ते । विशेषतः परिणामावधारणप्रयोजनार्थिना तु कर्मप्रकृत्यादयोऽवलोकनीयाः । मन्दबुद्धिबोधप्रयोजनत्वात् प्रस्तुतारम्भस्य । निरूपयिष्यते तदधिकारस्थले च किञ्चिन्मयापि स्थानाशून्यतामात्रोपयोगीति । तेषां ग्रहणादिना परिवर्त्तोऽवस्थान्तरापादनं पुद्गलपरावर्त्तशब्दाभिधेयः । न च तन्निरूपणेन विना अवाप्तसम्यक्त्वादेर्दुलम्भताऽनादरे च धर्मस्य जननमरणानन्तता प्रतियेतेति युक्तं पुद्गलपरिवर्त्तादित्वेन धर्मयोग्यकालस्य निरूपणमिति । इति प्रथमगाथार्थः । पञ्चम्यां विंशिकायां तद्बीजादिक्रमः । तस्य-प्रसिद्धस्य धर्मरागस्य किं वा सम्यग्दर्शनादेः । न च तच्छब्दस्य पूर्वपरामर्शशक्तत्वात् पूर्वं च धर्मरागसम्यग्दर्शनाद्योरेकतरस्यापि न निरूपणमभूद् येन तत्परामृश्यते इति वाच्यम् । वुद्धितत्तोपलक्षितेऽपि तस्य शक्ततरत्वात् । धर्मरागः सम्यग्दर्शनादिर्वा वुद्धिस्थं त्वस्त्येव । यतस्तत्कारणतैव चरमपुद्गलपरावर्त्तप्रज्ञापनस्य । उक्तं चैतत्पूर्वमेव शुद्धपदव्याख्यावसरे । वीजं गोधूमादेरिव गोधूमादिपरिणामिकारणं, तदादिक्रमः परिपाटी, वीजता च धर्मरागादेरनुवन्धावन्ध्यत्वाद्यङ्कुरादिजनकत्वात् सति शुभाध्यवसायजलसमायोगे । न च पर्यन्तवर्त्ति निर्वाणाख्यं फलं निर्हेतुकं, सदा सत्त्वासत्त्वभावप्रसङ्गात् । 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणा'दित्यभिज्ञोक्तेः । न च फलं कुत्रापि सहसैव बीजाद्युत्पादशीलं, किन्त्वङ्कुरादिक्रमेण । न च धर्मरागसम्यग्दर्शनादेर्हेतुर्वाच्य इति चरमपुद्गलपरावर्त्तस्यैव तद्धेतुत्वात् । तस्य तु तथाभव्यत्वमेव हेतुः एकविधत्वेऽपि कालस्य पृथक् पृथक् जीवेषु पृथक् पृथक् फलजननात् । तच्च पारिणामिकमिति नानवस्था । यद्वा-तस्यापि चतुःशरणाङ्गीकृत्यादिः । तस्य तु तथाक्षयोपशमाद्यपूर्वकरणोद्भवम् । न च नियत्यादिनिरपेक्षं किञ्चिदपि कार्यमभ्युपगम्यतेऽनेकान्तामृतपा-

तीर्थकरणशीलानामपि नैतावतः कालाद्धर्मप्राप्तिः प्राक् । परिपाटी चात्र नियमितकारणकार्यभावसूचया यथागुणस्थानानामपि केषाञ्चिदनुक्रमोऽन्तकृत्केवलिनि लघुजीविनि शास्त्रकारैः शिष्टः तथाऽत्रापि । नह्याकस्मिकी धर्मप्राप्तिर्भवतीति ज्ञापनाय । स्पष्टयिष्यति च स्फुटमेतत्प्रकरणे ह्येतत्तत्त्वजलनिधिः । षष्ठ्यां विंशिकायां पुनः येषु चरमपुद्गलपरावर्त्तबीजाङ्कुरादिषु सत्सु । अनेन पूर्वपूर्वस्योत्तरोत्तरेण सम्बद्धतामाह । न च भवति भविष्यत्यभूद्वा कस्याप्यनन्त्यपुद्गलपरावर्त्ते सम्यक्त्वलाभः तल्लाभेऽपार्धपुद्गलपरावर्त्तस्यान्तरेवान्तकरणनियमात् ।

★ 'अंतोमुहुत्तमित्तंपि फासियं हुज्ज जेहिं सम्मत्तं । तेसिं अवड्ढपुग्गलपरियट्टो चेव संसारो' ॥१॥ इतिशास्त्रोपदेशात् । नच वाच्यं सम्यक्त्वलाभः जघन्याराधनायामपि सप्ताष्टभिर्भवैर्भवोत्तारश्रवणात्,

"आराधनास्तु तेषां तिस्रस्तु जघन्यमध्यमोत्कृष्टाः । जन्मभिरष्टत्र्येकैः सिद्ध्यन्त्याराधकास्तासा ॥१॥ मिति वाचकवर्यवचनात् कथं पुद्गलपरावर्त्तार्धं किञ्चिन्न्यूनं यावत्पर्यटनं प्राप्तसम्यक्त्वानां, कथं च तथान्त्यावर्त्त एव तद्योग्यः कालोऽन्यत्रापि

≘ 'सम्मत्तम्मि उ लद्धे पलियपुहुत्तेण सावओ होज्जा ।
चरणोवसमखयाणं सागरसंखंतरा हुंति' ॥ १ ॥

इतिवाक्येनाल्प एव संसारकालोऽवगम्यते इति । सत्यप्यल्पैर्भवैर्निर्वाणसम्भवे केचिदाशातनाबहुलतया परिभ्राम्यन्त्येवापार्ध-

★ अन्तर्मुहूर्तमात्रमपि स्पृष्टं भवेत् यैः सम्यक्त्वम् ।
तेषामपार्द्धपुद्गलपरावर्त एव संसारः ॥ १ ॥

≘ सम्यकत्वे तु लब्धे पल्यपृथक्त्वेन श्रावको भवेत् ।
चरणोपशमक्षयानां सागरसङ्ख्यान्तरा भवन्ति ॥ १ ॥

स्वरूपत्वेऽपि सम्यक्त्वाविनाभावित्वादितरयोरस्यैव सम्यक्त्वशब्दाभिधेयत्वात्। व्यक्तं चैतत् शूरसेनवीरसेनदृष्टान्ते आद्याङ्गवृत्त्यादौ गतदर्शनस्य शब्दवेधाद्यखिलक्रियाणां नैरर्थक्यं दृष्टिमतश्च सकलासपत्नसपत्नपराजयस्य भ्रातृरक्षणस्य च विधानात्। यद्वा-लब्धसम्यक्त्वस्यैव बोधप्रवृत्त्योः सम्यक्त्वेनेतरथा ज्ञानाज्ञानकष्टरूपत्वेन तत्राप्येतदनुभावोद्भावित एव सम्यक्त्वव्यपदेश इति सुष्ठूच्यते सम्यग्दर्शनस्यैव सम्यक्त्वमित्यभिधानमिति। समञ्चति-व्याप्नोति सकल-रूप्यरूपिद्रव्याणि तत्प्रथमतया श्रद्धेयतया वा यः स सम्यक् रुचिरूपो भाव आत्मपरिणामविशेषः। * 'सव्वगयं सम्मत्तं सुए चरित्ते य पज्जवा सव्वे' त्तिवचनात्। केवलस्य सर्वविषयत्वेऽपि न श्रद्धेयतयेति व्युत्पत्तौ तन्निवेशः। यद्वा-सम्यगिति प्रशंसार्थो निपातस्तस्य भावः सम्यक्त्वम्। भवत्येव मिथ्यात्वविषमविषमूर्छितस्य सकलमपि कुत्सनायोग्यम्। अवाप्ते त्वस्मिन् घट्टकुटीप्रभातन्यायेन सकलमपि दानादि सफलतामेत्येव। सदपि श्रुतचारित्रयुगलमप्यभव्येषु नाभीष्टफलदतया अनुभूयतेऽन्यत्र परिणामकटुपौद्गलिकसुखामरत्वाद्याप्तेः। यद्वा-सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमितिन्यायाद् ज्ञानचारित्रयोः केवलयोरपि प्रयोगदर्शनात्। दर्शनस्य तु न क्वचनापि तमन्तरेण प्रयोग उपलभ्यते इति सम्यग्दर्शनस्यैव ग्रहः। पदैकदेशे पदसमुदायोपचारस्तु त्वप्रत्ययानर्थक्यापत्तेर्नोचित इति। एवकारोऽत्रापि व्यवस्थायाम्। तेन यथाप्रवृत्तिकरणापूर्वकरणानिवृत्तिकरणजन्यत्वं व्यवस्थापयति। ज्ञापयति चैतस्यावश्यमुपादेयताम्। एतेन ये केचिदाहुः-यन्नार्थोनेन, यतः पूर्वमगुणेनाप्यनेन यथा सागरोपमकोटीकोट्यूना क्षपिता कर्मसप्तकस्थितिस्तथा क्षपयिष्यत्यन्यामपि शेषामिति निरस्ता

* सर्वगतं सम्यक्त्वम्। श्रुते चरित्रे च पर्यवाः सर्वे।

'विधिसेवादानादी सूत्रानुगता तु सा नियोगेन ।
गुरुपारतन्त्र्ययोगा–दौचित्याच्चैव सर्वत्र' ॥२॥

न चाप्राप्तेऽस्मिन् भवति गुरुपारतन्त्र्यं, न च तदृतेऽस्ति कश्चनोपायो रागद्वेषमोहापकर्षे, यदाह– 'गुणवत्पारतन्त्र्यं हि, तदनुत्कर्षसाधनम्' । तथा 'इदं तु यस्य नास्त्येव, स नोपायेऽपि वर्त्तते । भावशुद्धेः स्वपरयोर्गुणाद्यज्ञस्य सा कुतः' ॥ तदवश्यं यतितव्यं मुमुक्षुभिरस्मिन् सर्वप्रयत्नेनैहिकामुष्मिकहितहेतौ परमनिर्वृतिनिर्वृतिबीजकल्पे प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिव्यञ्जके तत्त्वार्थश्रद्धानलक्षणे । एतदन्तरा दानादेरकिञ्चित्करत्वाच्छिवपुराध्वनि । यत :–

* आणाइ तवो आणाइ संजमो तह य दाणमाणाइ ।
आणारहिओ धम्मो पलालपूलु व्व परिहाइ' ॥

इति विशेषणाय पुनःशब्दप्रयोगः । क्वेत्याह चित्ते–मानसे, यद्यपि सम्यक्त्वमात्मगुणो, वर्त्तनं च तस्य तस्मिन्नेव स्याद् गुणिनं विना गुणस्यान्यत्राऽवृत्तित्वात् । चित्तं तु मनोवर्गणापरिणाम इति जडीभूतम्, तेन न तत्रास्य वर्त्तनं घटाकोटीमाटीकते, तथापि चित्तप्रभवत्वेन विशिष्टताख्यापनायैवमुपदेशः । यतो न तावत्सङ्ज्ञित्वाऽवाप्तिमन्तरेण भवति यथायोग्यमनोवर्गणोपादाननिष्पन्ना चित्तपरिणतिस्तल्लाभश्च चेन्नावाप्नुयात् प्रमादिनो धर्मभ्रष्टस्यानन्तं कालं यावन्निगोदभवपर्यटनादतिक्रान्तपुद्गलसङ्ख्याकोऽपि कालो गच्छेदेवेति न विहाय सञ्ज्ञिनमवाप्नोति कोऽपीदं क्रोधादिदर्शनमोहादिशान्तिजन्यम् । अत एवोक्तमन्यत्र धर्ममधिकृत्य 'धर्मश्चित्तप्रभवो यतः क्रियाधिकरणाश्रयं कार्यम्' इति । न च

* आज्ञायां तप आज्ञायां संयमः तथा च दानमाज्ञायाम् ।
आज्ञारहितो धर्मः पलालपूल इव परिभाति ॥१॥

'विधिसेवादानादी सूत्रानुगता तु सा नियोगेन ।
गुरुपारतन्त्र्ययोगा-दौचित्याच्चैव सर्वत्र ' ॥२॥

न चाप्राप्तेऽस्मिन् भवति गुरुपारतन्त्र्यं, न च तदृतेऽस्ति कश्चनोपायो रागद्वेषमोहापकर्षे, यदाह– 'गुणवत्पारतन्त्र्यं हि, तदनुत्कर्षसाधनम्' । तथा 'इदं तु यस्य नास्त्येव, स नोपायेऽपि वर्त्तते । भावशुद्धेः स्वपरयोर्गुणाद्यज्ञस्य सा कुतः' ॥ तदवश्यं यतितव्यं मुमुक्षुभिरस्मिन् सर्वप्रयत्नेनैहिकामुष्मिकहितहेतौ परमनिर्वृतिनिर्वृतिबीजकल्पे प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिव्यञ्जके तत्त्वार्थश्रद्धानलक्षणे । एतदन्तरा दानादेरकिञ्चित्करत्वाच्छिवपुराध्वनि । यत :–

* आणाइ तवो आणाइ संजमो तह य दाणमाणाइ ।
आणारहिओ धम्मो पलालपूलु व्व परिहाइ' ॥

इति विशेषणाय पुनःशब्दप्रयोगः । क्वेत्याह चित्ते–मानसे. यद्यपि सम्यक्त्वमात्मगुणो, वर्त्तनं च तस्य तस्मिन्नेव स्याद् गुणिनं विना गुणस्यान्यत्राऽवृत्तित्वात् । चित्तं तु मनोवर्गणापरिणाम इति जडीभूतम्, तेन न तत्रास्य वर्त्तनं घटाकोटीमाटीकते, तथापि चित्तप्रभवत्वेन विशिष्टताख्यापनायैवमुपदेशः । यतो न तावत्सङ्ज्ञित्वाऽवाप्तिमन्तरेण भवति यथायोग्यमनोवर्गणोपादाननिष्पन्ना चित्तपरिणतिस्तल्लाभश्च चेन्नावाप्नुयात् प्रमादिनो धर्मभ्रष्टस्यानन्तं कालं यावन्निगोदभवपर्यटनादतिक्रान्तपुद्गलसङ्ख्याकोऽपि कालो गच्छेदेवेति न विहाय सञ्ज्ञिनमवाप्नोति कोऽपीदं क्रोधादिदर्शनमोहादिशान्तिजन्यम् । अत एवोक्तमन्यत्र धर्ममधिकृत्य 'धर्मश्चित्तप्रभवो यतः क्रियाधिकरणाश्रयं कार्यम्' इति । न च

* आज्ञायां तप आज्ञायां संयमः तथा च दानमाज्ञायाम् ।
आज्ञारहितो धर्मः पलालपूल इव परिभाति ॥१॥

धर्मोऽपि तदाराधनयैव। अन्यथा त्वधर्म एव। यदुक्तम्–'वचनाराधनया खलु धर्मस्तद्बाधया त्वधर्म' इति। एतच्चापेक्ष्य बुधानुपदेश्यान्। अन्यथा दानादेरपि प्रथममुपदेष्टव्यत्वाद् बालादीनां यथायोगदेशनाविधानेनैवेष्टसिद्धेः। अयथार्हविधाने तु

'यद्भाषितं मुनीन्द्रैः पापं खलु देशना परस्थाने।' उन्मार्गनयनमेतद्भवगहने दारुणविपाक ॥१॥ मित्यादि शास्त्रशास्त्रितानर्थपरम्परापरिभवमात्र.। यद्वा– खलुशब्देनैतदवधारयति यत्– न खलु 'दानमौरभ्रिकेणापि चाण्डालेनापि दीयते। येन वा तेन वा शीलं न शक्यमभिरक्षितु' ॥१॥ मित्यादिवचसा कृपणतावल्लीवारिमुचा दानमकिञ्चित्करं ज्ञेयम्। यतो दानशीलादौ पूर्वनिपातभावादेव तस्यानुत्तमोत्तमता व्यक्तैव। न च गृहस्थानां परो दानाद्धर्मोऽस्ति परः। अत एवोक्तं भद्रबाहुपादैः:–

* 'चुक्कइ गिहिदाणधम्माओ'त्ति। न चादातुः कदर्यस्यास्ति शीलयोग्यता। यदाहुरष्टादशदेशाधिपप्रतिबोधविधानविहितसमग्रसत्त्वाभयदानस्थापिताकल्पयशःशरीराः हेमचन्द्रपादाः:–

यः सद्बाह्यमनित्यं च, क्षेत्रेषु न वपेद्धनम्। कथं वराकश्चारित्रं, दुश्चरं स समाचरेत् ॥१॥ इत्यादि। 'दान'मित्यादिवचो न दानस्याकिञ्चित्करताज्ञापकं, किन्तु शीलस्य श्रेष्ठतादर्शकमेव। अयमेव च करालकलिकालकल्मषप्रभावो यदुत– स्वदुर्गुणपोषकतयैव श्रुताश्रितिः श्रेय आशंसया। एष तावत्काव्यविदां [illegible] यत्प्रकरणादिनैवार्थपरिच्छेदः। प्रकरणं तु [illegible]तिना[illegible] प्रतिबद्धम्, न तत्र दाननिषेधः कल्पयितुं शक्यः [illegible] क्षणेन कल्पस्थितेन। न चाजातनिर्ममभावेन [illegible]

* भ्रश्यति गृहिदानधर्माद्।

अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान्। पूज्यो हितकामानामिति भक्त्या पूजनं पूजा ॥१॥ (षोडशके) इति व्युत्पादितायाः विधिर्मनोवाक्कायशुद्ध्यादिः उपकरणभावशुद्ध्यादिर्वा। अत्र पूर्वत्र च विंशिकाया अधिकारे विधिशब्देनाचार्यो दर्शयति विधेः प्राधान्यतां धर्माऽनुष्ठाने। अनुमतं चैतच्चिरन्तनैरपि महात्मभिः। यदाहुस्ते –

॰ जह भोयणमविहिकयं विणासइ विहिकयं जियावेइ।
तह अविहिकओ धम्मो देइ भवं विहिकओ मुक्खं ॥१॥ ति

वाक्येन। अन्यच्च अविध्यनुष्ठानस्य द्रव्यानुष्ठानतैव। अभिमतैरभिहितं च स्वयमेव–अपेक्षा चाविधिश्चैवापरिणामस्तथैव च। प्रत्याख्यानस्य विघ्नास्तु, वीर्याभावस्तथा परः ॥१॥ अपेक्षादिकृतं ह्याद्यं–द्रव्यप्रत्याख्यानमित्यर्थः। अयं चोपदेशोऽविधिपरिहारौपयिक एव, नत्वनुष्ठाननिषेधपरः। यतः स्वच्छन्दो रचितविविधवाग्वागुराव्यावाधितमुग्धपशूनां नास्तिकमूर्धन्यानां विषयवासनातृप्तिपरायणानां गुरुलोपिनां धर्मगुरुत्वाभिधानमलिकमुद्वहतां स्ववासनातृप्तयेऽलम्भविष्णुः। आहुश्चात एवाभियुक्तराः–

॰ ‘अविहिकया वरमकयं उस्सुयवयणं वयंति गीयत्था।
पायच्छित्तं जम्हा कए लहुयं अकए गरुयं ॥१॥’

अन्यत्र ‘जिनोक्तमिति सद्भक्त्या ग्रहणे द्रव्यतोप्यदः। बाध्यमानं भवेद्भाव–प्रत्याख्यानस्य कारण ॥१॥’ मिति। तत्त्वमवधार्यं चात्र यदुताऽत्र द्रव्यता नाऽप्राधान्येन किन्तु भावकारणत्वेन। अत एव च धर्मसङ्ग्रहण्यामविध्यनुष्ठानं भावधर्मतयापि प्रतिपादितं चेत्तद्भक्तिकृतं स्याद्। अभिहितश्चाचार्यो व्याख्यायामपि

॰ यथा भोजनमविधिकृतं विनाशयति विधिकृतं जीवयति।
तथाऽविधिकृतो धर्मो ददाति भवं विधिकृतो मोक्षम् ॥१॥

॰ अविधिकृताद् वरमकृतमुत्सूत्रवचनं वदन्ति गीतार्थाः।
प्रायश्चित्तं यस्मात् कृते लघुकं अकृते गुरुकम् ॥१॥

'कूपोदाहरणादिह कायवधोऽपि गुणवान्मतो गृहिणः ।
मन्त्रादेरिव च ततस्तदनुपकारेऽपि फलभावः ॥१॥
कृतकृत्यत्वादेव च तत्पूजा फलवती गुणोत्कर्षात् ।
तस्मादव्यर्थैपारम्भवतोऽन्यत्र विमलधियः' ॥२॥ (पोडशके)

चैत्यविधानविपयापि नाऽऽरेका कल्याणातिरेकाधायिनी। यत आहुः पूज्या :—

'एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम् । अभ्युदयाविच्छित्त्या नियमादपवर्गबीजमिति ' ॥१॥ न च स्वकल्पितहिंसाबुद्ध्या तत्परिहारः श्रेयान् । यतो न हिंसैव तत्र, "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" (तत्त्वार्थ.) इति सूत्रेण यतनाऽभावस्यैव तल्लक्षणत्वात्, न चात्र यतनाऽभावो येन हिंसाद्यापत्तिः स्याद् लोमपिच्छादिना तद्भावात् । आह च-'यतनातो न च हिंसे'ति-न च हिंसाऽभावेऽपि नाऽऽयसाधनमिति, यतस्तस्यास्तन्निवृत्तिफलत्वाद् यदाहुभा :—

'यस्मादेपैव तन्निवृत्तिफला । तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेवैतदि ॥१॥ त्यादि । कियद्विवेचनीयाः कृष्णा दधिमापभोजनात् । यद्वा-चकारः पूर्वत्रोत्तरत्र च प्रतिपाद्यमानगुणयुक्ततां समुच्चिनोति । तथा च य आहुः—

' जिनस्य जितमारस्य, याचित्वा पुरतः शिवम् ।
लप्स्यामो निर्गुणेष्वर्हन्नुपकर्त्ता न संशयः ॥ '

ते निरस्ताः । यतो न नतसामन्तश्रेष्ठ्यादिनरगणो नृपोऽपि सन्तु [illegible] भक्तिकारिणे आज्ञाविराधकाय, किमुत त्रिलोकभर्तुर्नतनरामरेकिरीटकान्तिद्योतितक्रमयुगलस्याज्ञामुपेक्ष्य फललिप्सा । अत एवाहु शब्दानुशासनपरमब्रह्माणः श्रीहेमचन्द्रपादाः—

'वीतराग ! सपर्यातस्तवाज्ञाराधनं परम् । अ. न. ११९।४

® 'विवरीयपरूवणाए ये 'ति प्रतिक्रमणं कथं सम्भवीति। पश्चात्कृताद्यपेक्षयैतद्विधेर्व्याख्याकारैरेव निर्णीतत्वात्। श्रीस्थानाङ्गवृत्तावपि श्रोतृकतैवाभिमताऽस्य आख्याति शृणोति चैक' इत्यादिचतुर्भङ्ग्याम्। श्रावकाख्याविधानेनाभिदधते च ग्रन्थकारा यदुत–धर्मश्रवणेऽवश्यं यत्नः कार्यः शेषपरिहारेणापि, अन्यथा सम्यक्त्वादिविलयविभावनान्नन्दमणिकारादेरिव । अत एव प्राङ् मार्गानुसारिगुणाख्यानावसरे 'प्रत्यहं धर्मश्रवण'मित्यभिधाय पुनः श्रावकधर्मप्रस्ताव ऊचुः'जिनवचनश्रवणे नियोग' इति। यच्च श्रीमदुमास्वातिमिश्रैः–'सम्यग्दर्शनसम्पन्नः षड् विधावश्यक निरतश्च श्रावको भवती'ति व्याचक्षे लक्षणमिति श्रूयते, तत

® 'समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा ॥

अंतो अहोनिसस्स य तम्हा आवस्सयं णाम' ॥१॥ इति

श्री अनुयोगद्वारव्याख्याताऽऽवश्यकव्युत्पत्त्यनुसारेण । यद्वा–श्रीमहानिशीथोक्तचैत्यवन्दनादीनि षडावश्यकानि प्रतीत्य ज्ञेयम् । यतः दर्शनश्रावकस्यापि भवन्त्येव चैत्यवन्दनादीनीति । यद्यपि श्रावक शब्देन दर्शनदेशविरतिश्रावकयोर्ग्रहणं स्यात् परं पूर्वं सम्यक्त्वाधिकारविंशिकायां षष्ठ्यां सम्यक्त्वस्य प्रतिपादितत्वादत्र देश विरतस्यैवाधिकारः। तस्य धर्मः- यथ यदनुष्ठानम वचनाद विदितम्। मैत्र्यादिभावसंयुक्तं तद्धर्म इति कीर्त्यते, ॥१॥ इ श्लोकलक्षितमनुष्ठानं संयमासंयमादि । यद्यपि मार्गानुसारित्व सामान्यतोऽस्ति गृहस्थधर्मः, परं सोऽन्यत्र न्यक्षेण निरूपित इ नात्राधिकृतः, प्रतिमोद्वहनादि त्वग्रे वक्ष्यतीति व्रताभ्युपगमाहोरा

® विपरीतप्ररूपणया च ।

® श्रमणेन श्रावकेण च अवश्य कर्तव्यं भवति यस्मात् ।
अन्तः अहोनिशस्य च तस्मादावश्यकं नाम ॥१॥

श्रद्धाच्छेद-हिंसानुमति-सर्वविरत्यनङ्गीकृत्यादीनि दूषणानि । न च सर्वेऽपि समसहिष्णुताका यत्प्रतिपद्येरंस्ते सर्वविरतिम् । भवति च यतिधर्मानुरक्तानामेव देशविरतिः, नान्यथेत्यादावाख्येय एवासौ विधिविदा, प्रथमश्रोतयैवायं नियमोऽवगतदेशसर्वविरतिस्वरूपाणां यथायोग्यं देशाद्यवगम्याऽऽख्येयमिति ।

दशम्यां विंशिकायां-'तत्प्रतिमाश्च भवन्ति बोद्धव्याः' । तत्र तस्य-पूर्वाधिकाराधिकृतस्य, नान्यस्य । देशविरत्यादेरनङ्गीकर्ता न प्रतिमोद्वहनयोग्यनैव, कुतस्तद्वहनमिति । प्रतिमाः-अभिग्रह-विशेषा एव । प्रतिमीयते च तासामुद्वोढा मुन्यादिभिरिति तस्य प्रतिमात्वम् । यद्वा-पारिभाषिकोऽयमभिग्रहविशेषे । बहुत्वं च प्रतिमाबहुत्वापेक्षम् । चकारोऽप्यर्थे । तेन श्रावकधर्मप्रतिपत्तौ प्रतिमाप्रतिपत्तिनियमो नेति ध्वनयति । यद्यपि तत्पूर्विका साधुत्वावाप्तिरिति दृश्यतेऽनेकत्र, परं न नियमः । यतो भवत्येव केषाञ्चित् सम्यक्त्वोत्पादकाल एव सर्वविरत्यङ्गीकृतिः । अनेके च तदन्तरा सर्वविरता इति । यद्वा-अवधारणे चकारः । भवति चान्तर्मुहूर्त्तेनापि कालेनैकादशानामपि प्रतिमानां परिपालनम् । इदं चावधारणं श्रावकधर्मेण सहचारित्वमात्रे इति न सम्यक्त्वोत्पादकाले सर्वविरत्यङ्गीकारे कश्चनापि दोषलेशः । यद्वा-चोऽप्यर्थेऽपिश्च सम्भावनायाम् । भवन्ति अधिकृता इतिशेषः । दशम्यां किल विंशिकायां श्रावकप्रतिमा अधिकृताः सन्तीत्यर्थः । चकारस्यात्र सम्बन्धात् ता बोद्धव्याः । यद्वा-दशम्यां विंशिकायां श्रा... प्रतिमा बोद्धव्या भवन्ति-सन्तीत्यर्थः । न च बोद्धव्ये तशब्दे. ज्ञेयमात्रता तासां, सर्वविरतानां मुनीनां अमरावजिनतपाद न तासां बोद्धव्यत्वेपि देशविरतानां प्रतादिप्रतिपत्तिप्र ति.तिपर यग तासामुपादेयत्वात् । न चोपादानमन्तरेण ज्ञानं, न विनेष्टसाध... स्वरूपज्ञानं वोपादेयस्योपादानं सम्भवतीति बोद्धव्यतोक्ता ।

आवश्यकं च क्रियाया अप्यभ्यासविशेषेण निरतिचारतापादनम्, ज्ञानक्रियोभयसाध्यत्वाच्छिववर्त्मनः, सातिचारायाश्च तस्याः स्वसाध्यासाध्यत्वात्, 'व्रतानि सातिचाराणि सुकृताय भवन्ति ने'तिवचनात् । यद्यपि विद्योपादाने शिक्षिस्तथापि भिदाद्यन्तर्गतत्वेन अधिकारार्थविवक्षया आङ्विधानादभ्यासमात्रे शिक्षेति निपातः स्यात् । पठ्यते वा 'शिक्ष अभ्यासे' इत्यपि । यद्वा-क्रियाकलापः शिक्षणमपि विद्याभ्यास एव, कर्मजाया अपि वुद्धेः श्रवणात् । भवति चाभ्यस्तक्रियस्य चापल्यादिना वुद्धिविशेषः प्रत्यक्षसिद्धः । भवति वा जिज्ञासायां शकः सन्नन्तादात्मनेपदं 'पितोऽङ्' (सि. ५।३।१०७) इति सूत्रेण चाङ् भवति । ततः शिक्षाशब्दनिष्पत्तिः । जिज्ञासा च ज्ञाने क्रियायां च समानैवेति द्विविधशिक्षाग्रहणमर्हत्येव योग्यतां, शिक्षतेरेव च जिज्ञासार्थ इत्येके । चकारो न केवलं क्षान्त्यादिको यतिधर्म एव निरूप्यते, किन्तु शिक्षापि द्विविधेति ज्ञापनाय । यद्वा-न मूलगुणोत्तरगुणधारित्वमात्रेण निःश्रेयससाधनं किन्तु द्विविधशिक्षाग्रहणेनैव । यतो न तावदज्ञानिनः किञ्चिदपि हेयोपादेयादिपरिज्ञानं कुतस्तरां तद्धानोपादानादि । तदाह- * 'अन्नाणी किं काही किं वा नाहीइच्छेयपावग'मिति । न च स्वाध्यायविहीनस्य धर्मध्यानादिः, आज्ञाविचयादिरूपत्वात्तस्यातिक्रान्तकपिचापल्यत्वाच्च मनसः, कुतश्चिदपि न स्थिरीभावः । तदाहुः- 'पैशाचिकमाख्यानं श्रुत्वा गोपायनं च कुलवध्वाः । संयमयोगैरात्मा निरन्तरं व्यापृतः कार्य (प्रशम०) इति ॥ न चास्वाध्यायितस्य जीवादितत्त्वज्ञानमपि, सम्यग्दर्शनमूलस्य ज्ञानस्याभावान्न स्यादेव च संयमो यदाहुः परमर्षयः-

---

* अज्ञानी किं करिष्यति किं वा ज्ञास्यति छेकपापकम् ।

यत आह–* 'सुहसायगस्स समणस्स सायाउलगस्स पगामसाइस्स।
उच्छोलणापहोयस्स दुलहा सुगई तारिसगस्से'ति वचनादनति-
लङ्घनीया प्रत्युपेक्षणादिलक्षणाऽऽसेवनशिक्षा । प्रतिक्रमणादि तु
गृहीतव्रतपरिशोधकत्वेन न कथञ्चिदप्युपेक्षणीयमिति । यद्वान्न
क्रोधादिकारणेऽप्राप्ते धृते क्षान्त्यादिकेऽज्ञानिकृतकरणो धर्तुमात्मा-
नमलं परीषहादिप्रसङ्गे इति ज्ञानकृतकरणताप्यायवश्यं स्वीकार्या
शिक्षेति हेत्वर्थं चकारं चकारः । 'एतस्ये'ति । समीपतरकादस्यां
विंशिकायां निरूपितस्य भिक्षोः । अनेन अवाप्तमूलोत्तरगुणशुद्धि
कस्यैव शिक्षाया योग्यतेति ज्ञापयति । न हि क्रोधादिदूषितचेत
स्कोऽवाप्नोति योग्यतां शिक्षायाः, तस्य विपत्तिव्रातयोग्यत्वाद्
यत आह-चित्तरत्नमसङ्क्लिष्टमान्तरं धनमुच्यते । यस्य तन्मुषि
दोषैस्तस्य शिष्टा विपत्तयः ॥१॥ (अष्टके) न च वाच्यं प्रति
मणाद्यासेवनाशिक्षायोग्यता मा भवतु परं सूत्रार्थग्रहणशिक्षा
योग्यता न कथं घटाकोटिमाटीकते । यतो नाज्ञानमृते कष्टं कष्टतर
किञ्चित्, । क्रोधादिभ्योपि तस्य पापीयस्त्वात्तदुक्तम्–अज्ञान
खलु भो ! कष्टं क्रोधादिभ्योऽपि तीव्रपापेभ्य'इति : नानवाप्ते
ज्ञाने नश्यति कदाप्यज्ञानमिति । पापीयस्त्वेऽपि क्रोधादिभ्योऽज्ञा
नस्य न क्रोधाद्यपगमाभावे वोधसम्पद् समुल्लसति चित्ते । न
मलीमसे भाजने पच्यमानः पाकः पुष्टिपरायणः स्यात् । अत ए
तस्य धर्ममात्रेप्ययोग्यताभिहिताऽऽप्तैः–"धर्मस्य दयामूलं न चा
मावान् दयां समाधत्ते । तस्माद्यः क्षान्तिपरः स साधयत्युत्तमं ध
(प्रशम०) मिति । आस्तामन्यत्, ।व. ९ ।द२५त
नाभिमता आगमग्रन्थे–

---

* सुखास्वादकस्य श्रमणस्य साताकुलस्य प्रकामशायिनः ।
उच्छोलनाप्रधाविनः दुर्लभा सुगतिस्तादृशस्य ॥

मुनि'रिति । स्वयं पाकित्वाभाव एव भव्यः । अन्यच्च भिक्षाटने-नैकपिण्डाभावोऽपि व्यक्तीकृतः सूरिणा, तथाभाव एवाहार-शुद्धिभावाद् । अन्यथा त्वाहारस्याधाकर्मत्वादिदोषदुष्टत्वेनानुपादेयत्वात्तस्योपादाने तु हिंसाद्यनुमत्या सप्तानां वाऽष्टानां कर्मणां ह्रस्वस्थितिकानां दीर्घस्थितिकत्वभावात् यावन्निधत्तभावात् संयमफलफल्गुतापातः स्पष्ट एव सूत्रेऽभिहितः । लौकिका अप्याहुः 'एकान्नं नैव भुञ्जीत बृहस्पतिसमादपी'ति । शिक्षाविंशिकानन्तरं भिक्षाविंशोविभजनेन सर्वसम्पत्करीभिक्षासम्पन्नतामाह शिक्षा-युतस्य । यदाह- यतिध्यानादियुक्तो यो गुर्वाज्ञायां व्यवस्थितः । सदानारम्भिणस्तस्य, सर्वसम्पत्करी मता ॥१॥ वृद्धाद्यर्थमसङ्गस्य भ्रमरोपमयाऽटतः । गृहिदेहोपकाराय, विहितेति शुभाशयात् ॥२॥ (अष्टके) न चानेवंविधस्य सर्वसम्पत्करीसम्भवोपीति । भवति च भिक्षोर्भिक्षामात्रोपजीविता । यदाह- 'महाव्रतधरा धीरा भैक्षमा-त्रोपजीविन' (योगशास्त्रे) इति । तस्या विधिः- आधाकर्मादि-षोडशोद्गम-धात्र्यादिषोडशोत्पादना-शङ्कितादिदशकैषणादोषवर्जनेन प्रासुकैषणीयादिग्रहणरूपः । एवंविध एवैषणासमितिविषयः । यदाह- 'द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् । मुनिर्यदन्न-मादत्ते, सैषणासमितिर्भवेद् (योग०) इति । अनेन ये एकत्र गृहमेधिगृहे आदत्तेऽन्नादि गृह्णाति च सचित्तमुदकं, लेलिप्यन्ते च पुरःकर्म-पश्चात्कर्मदोषलेपेन ते साधुत्वभ्रष्टा निर्धर्माणोऽवबो-द्धव्या इति स्पष्टं दरीदर्शयति । * 'पिंडं असोहयंतो अचरित्ती इत्थ नत्थि संदेहो'त्तिवचनात् । 'से संजए समक्खाए निरवज्जाहार जे धम्मकायठिए सम्मं'तिवचनाच्च । न च वाच्यं तरतमेन दोषेणा-वगुण्ठितं कृतकारितानुमतीनामिति । अनिषिद्धस्य तावदशुभ तत्व

* पिण्डमशोधयन् अचारित्री अत्र नास्ति सन्देहः ।

® 'बायालीसेसणसंकडंमि गहणंमि जीव नहु छलिओ। संपइ मा हु छलिज्जसु भुंजंतो रागदोसेहिं'॥ ति वचनात्। यद्वा 'शुद्ध' इत्यनेन षट् कारणानि ज्ञापयत्याहारस्य, यन्नैव वर्णबलाद्यर्थं गृह्णात्याहारं किन्तु विनयाद्यर्थमेव। अन्यथा तु विधिगृहीतो भुक्तोऽपि न विधिना न संयमवृद्धये किन्तु प्रमादपरिप्लुतध्वान्तःकरणतया लेपायैव। अत एवाहुः भोजनावसरे भावनामयं गाथोच्चारणं विज्ञाः-

® अहो जिणेहिं असावज्जा वित्ती साहूण देसिया। मोक्खसाहणहेउस्स साहुदेहस्स धारणा ॥इति। विनयादेश्च परमपदपरमसाधनत्वेन तत्कारणकैकभक्ताहारस्योत्सर्गता उपवासादेश्चापवादता जगदिरे ग्रन्थकारैरेवाभियुक्तैरन्यत्र। ® 'अहो! निच्चं तवोकम्मं एगभत्तं च भोयणं'ति परर्षिवाक्यमपि। संशयित एवासावर्थो यदुत- आहारो नित्यो नैमित्तिको वा? अनयोः परस्परविरुद्धत्वादितिचेद्। अत्र केचित् ® 'जइ तेणेव संथरइ'त्ति सिद्धान्तात् स्वाध्यायादीनां नित्यत्वात्तदर्थाहारादेर्नित्यतैव। अत एव च 'अहो निच्चं'ति। 'वेयणवेयावच्चे' इति तु कर्त्तव्यतोपदर्शकमिति नास्य नैमित्तिकता। अपरे त्वेकभक्तातिरिक्तस्य नैमित्तिकतामेकभक्तस्य तु नित्यतामाहुः। न चोपवासादिदिने नित्यताहानिः, न च न कर्त्तव्यमुपवासादि, तदकरणे प्रायश्चित्तोपदेशात्। यदाहुः- ® पक्खियचउम्मासिसंवच्छरेसु चउत्थछट्ठट्ठमं न करेइ पच्छित्तं। ६९. जीतवाच्य-

---

® द्विचत्वारिंशदेषणासङ्कटे ग्रहणे जीव? नैव छलितः।
सम्प्रति मैव छलयेथा भुञ्जानो रागद्वेषाभ्याम् ॥

® अहो! जिनैरसावद्या वृत्तिः साधूनां देशिता।
मोक्षसाधनहेतोः साधुदेहस्य धारणाय ॥

® अहो! नित्यं तपःकर्म एकभक्तं च भोजनम्। ® यदि तेनैव संस्तरति।

® पाक्षिक-चतुर्मास-संवत्सरेषु चतुर्थषष्ठाष्टमं न करोति प्रायश्चित्तम्।

पुनर्मङ्गलादिविधानं गुरुत्यनिवृत्ति । न च वाच्यं सर्वज्ञो यदि भिक्षामटति तदा कथङ्कारं विघ्नास्तदपहारः शुद्धभिक्षालाभश्च सम्भवति । यतः प्रतिहताखिललाभादिविघ्नत्वेन न तत्प्रादुर्भाव-स्तदभावे कुतस्त्यमां तदपहारः । शुद्धभिक्षालाभश्च करामलकवद्जगत्त्रयस्य साक्षादवलोकितत्वादावश्यकवायुकायविराधनासद्भावात् अतीतानागतस्वरूपावलोकनाच्च न कथञ्चनापि सम्भवतीति । यतो यद्यपि जघन्यतः कोटाकोटीसुरसेवितचरणपद्मः केवलोत्पादानन्तरमेव स्थापिततीर्थतीर्थतया अनेकयोगीन्द्रसेवितक्रमसरोरुहः न कदाचनाप्यटति भिक्षायै, तथापि यावत् सर्वज्ञं नाटनाभावो भिक्षायै, परं समूलघातं घातिताखिलघातिकर्मतया न तेषामन्तरायोद्भवः, न च तदुपशमनाय मङ्गलादिकरणं भिक्षालाभस्त तेषां भवत्येव, सकलाविकलाचाराचरणपटुशासनालम्बनीभूतश्रुताप्रामाण्यनिवारणाय श्रुतोपयोगेन गृह्णीयुः यतस्ते ॥ 'ओहेसुओवउत्तो' इतिवचनात् । न च 'नट्ठंमि छाउमत्थिए नाणे'त्तिवचनात्कथं तेषां अवलोकितलोकालोकवस्तूनां केवलवेदसा केवलिनां सम्भवति श्रुतोपयोग इति वाच्यम् । नहि समुत्पन्ने केवले श्रुतोपयोगं नष्टस्तथा सति तेषां तावदज्ञानेनासर्वज्ञापतेः, तैरेव तत्प्रणयनात् तत्प्रणीतत्वेनैव च श्रुतस्य प्रामाण्योपपत्तेः । 'परलोकविधौ मानं वचनं तदतीन्द्रियार्थदृग्व्यक्त'मितिवचनात्, किन्तु केवलज्ञानावरणावृतजीवसूर्यनिर्गतमन्दप्रकाशोद्भवतया यच्छाद्मस्थिकं तन्नष्टम् । तथा च न तस्य क्षायोपशमिको भाव इति । अत एवात्र 'ओहे'त्ति सामान्यार्थकं पदम् । यथाहि मतिश्रुतोपयुक्त ओघेन सर्वाणि द्रव्याणि जानातीत्यादि वर्ण्यते तथैवैषोऽत्र श्रुतो

॥ ओघे श्रुतोपयुक्तः ॥ नष्टे छाद्मस्थिके ज्ञाने ।

अग्रहणे एव तेषां पर्यवसानं, नाग्रतः। यद्वा-भिक्षाया एव योजनाय तच्छब्दप्रयोगः, अन्यथा विधिशब्दपरामर्शेन विध्यन्तराया अधिकृताः स्युः। ते च प्रत्यपायाः प्रायश्चित्तार्हा एव। शोधिश्च तेषामवश्यं कर्त्तव्या स्यादिति। बहुवचनं चान्तराय-बहुत्वख्यापनाय। तेन च ज्ञापयति पिण्डैषणादिश्रवणस्यैव भिक्षाटननिर्गमनादियोग्यता = 'अणहीया खलु जेणं पिंडेसण-सिज्ज-वत्थपाएसा। तेणाणीयाणि जइणो कप्पंति ण पिंडमाईणि' त्तिवचनात्। चतुर्दश्यां विंशिकायां 'अशुद्धिलगने आलोचनाविधानं' तत्राशुद्धयः अतिक्रमव्यतिक्रमातिचारानाचाराः। अतिक्रमादिस्वरूपं चाधा-कर्माश्रित्यैवं भणितम्- '® आहाकम्मामंतण पडिसुणमाणे अइक्क-मो होइ। पयभेयाइ वइक्कमो गहिए तइओयरो गिलिए' ॥१॥ तथा सर्वत्रापि ज्ञातव्यम्। तासामापत्तौ न हि यावत्कषायसमुदयोऽस्ति, तावदतिचारासम्भवस्तदुद्भवत्वात्तेषां, ® 'संजलणाणं उदए अइया-र' त्तिवचनात्। अन्येषां तूदये मूलच्छेद्यमेव। एतच्च सर्वविरत्य-पेक्षयैव। ननु बाहुबल्यादीनां वर्षं यावन्मानस्थितिश्रुतेः सञ्ज्व-लनकषायस्य च पक्षस्थितिनियमात् कथमेतदिति चेद्। अत्र केचि० सञ्ज्वलनस्याप्यनन्तानुबन्ध्यादिभेदभिन्नत्वादप्रत्याख्यानवत्सञ्ज्व-लनोदयान्न वर्षस्थितिविरोधः। एतदेव सञ्ज्वलनत्वं, यद्गु० वचनमात्रं प्रतिबोधहेतुः। न चैवंविधः स्वतन्त्रोऽप्रत्याख्यान० अन्ये तु पक्षादिस्थितिनिरूपणं व्यवहारनयेन मध्यमापेक्षयैव। ० न वर्षावस्थानमात्रेणाप्रत्याख्यानतेति। एवमेव प्रसन्नचन्द्रर्षेरपि

---

= अनधीता खलु येन पिंडैषण-शय्या-वस्त्र-पात्रैषणा।
तेनानीतानि यतेः कल्पन्ते न पिण्डादीनि ॥

® आधाकर्मामन्त्रणं प्रतिशृण्वति अतिक्रमो भवति।
पदभेदादौ व्यतिक्रमो गृहीते तृतीय इतरो गिलिते ॥

® सञ्ज्वलनानामुदये अतिचाराः।

आपन्नदोषेण सर्वेणापीति । आङ् मर्यादया ॰ 'आलोयणानिमित्तं खित्तंमि सत्त जोयणसयाइं । काले बारस वासा गीयत्थगवेसणं कुज्जा, ॥१॥ इतिगवेषणे । तत्रापि गीतार्थस्य पुरतः, यतः- ॰ 'नासेइ अगीयत्थो चउरंगं सव्वलोयसारं जं । नट्ठंमि उ चउरंगे न हु सुलहं होइ चउरंगं'॥ति । तत्रापि व्रतसम्पन्नस्य । आह च-॰ 'अखंडिय चारित्तो वयगहणाओ हविज्ज जो निच्चं । तस्स सगासे दंसणवयगहणं सोहिगहणं च' ॥१॥ अभिविधिना वा सर्वातिचारप्रकटनादिना, यदाह-॰एवंविहगुरुपासे लज्जागारवमोह मोत्तूणं । सव्वंपि भावसल्लं उद्धरियव्वं जओ भणियं ॥१॥ 'जहवालो' इत्यादि । संवेगमुद्वहता प्रायश्चित्तापत्तिपरितप्तहृदयेन लोचना-गुरोः पुरतः प्रकाशनमालोचना, तस्या विधानं-करणं स्वयमिति अध्याहार्यम् । परानुवृत्त्याद्यनुष्ठानमात्रस्याशुद्धत्वात् । भवति चैवमालोचनाविधाने पापप्रलयः । यदाह – ॰ ' अन्नाणदोसवसओ काऊण वि अणेगगरुयपावाइं । सम्मं आलोयंतो सव्वंपि छउलए जीवो' ॥१॥ इतिवचनात् । अन्तःशल्यश्च लक्ष्मणेवावाप्नोति घोरतपश्च

---

॰ आलोचनानिमित्तं क्षेत्रे सप्त योजनशतानि ।
काले द्वादश वर्षाणि गीतार्थगवेषणं कुर्याद् ॥१॥

॰ नाशयत्यगीतार्थः चतुरङ्गं सर्वलोकसारं यत् ।
नष्टे तु चतुरङ्गे नैव सुलभं भवति चतुरङ्गम् ॥

॰ अखण्डितचारित्रो व्रतग्रहणाद् भवेद् यो नित्यम् ।
तस्य सकाशे दर्शनव्रतग्रहणं शोधिग्रहणं च ॥१॥

॰ एवंविधगुरुपार्श्वे लज्जागौरवमोहं मुक्त्वा ।
सर्वमपि भावशल्यं उद्धर्तव्यं यतो भणितम् ॥१॥

॰ अज्ञानदोषवशतः कृत्वापि अनेकगुरुकपापानि
सम्यगालोचयन् सर्वमपि ह्रासयति जीवः ॥१॥

शोधयति कुत्सिताचरणजातमलिनसंस्कारवदिति प्रायश्चित्तम्। उभयत्रापि पृषोदरादित्यादिष्टरूपसिद्धिः । 'पृषोदरादयः' (सि० ३।२।१५५) इति सूत्रमाकृतिगणसाधकं यतः। यद्यपि पूर्वोक्ताऽऽलोचनापि प्रायश्चित्तभेद एव 'आलोयणपडिक्कमणे'-त्यादिवचनादिति नार्थः पृथगधिकारेण, परमालोचनायाः प्राधान्य-ख्यापनार्थमवक्रतयाऽऽलोचनयत्नकरणज्ञापनार्थं सकलपापाचरण-जनितात्माशुद्धिप्रक्षालनप्रवीणप्रायश्चित्तासाधारणकारणताविष्ट-नाख्यानाय वैवमुपन्यासः । न सर्वाणि पापान्यालोचनामात्र-विशरारूणि किन्तु कानिचिदेव । यानि च नालोचनाविशरारूणि तेषामवश्यं विधातव्यैव शोधिरिति तच्छुद्धये प्रायश्चित्ताचरण-मावश्यकम् । दीयते चालोचितपापस्यालोचनाप्रायश्चित्तातिक्रान्ते-ऽतिचारे प्रतिक्रमणादि,तप आदि वा । आस्तामन्यत्, अज्ञातातिचार-विशेषस्यापि दीयत एव तत्सम्भवेन, प्रत्यहं दिने चतुरुद्योतकरमानं प्रतिरात्रं पञ्चाशच्छ्वासमानं कायोत्सर्गं, पाक्षिके त्रिशतं, चतुर्मासि पञ्चशतं, वार्षिकेऽष्टसहस्रमुच्छ्वासानां चतुर्थषष्ठाष्टम-तपोपि क्रमेण प्रायश्चित्तम् । न चैतत् मिथ्यात्वनिबन्धनम्। ① 'अपच्छित्ते अ देइ पच्छित्तं'ति वचनादितिवाच्यम् । अप्रमत्तस्यो-पयुक्तस्यापि जघन्यतोऽप्येतावदापत्तेः । अत एव अन्यातिचारस्य पृथगालोचनाप्रायश्चित्तादि सङ्गच्छते । अगृहीते च प्रायश्चित्ते प्रतिसेवितप्रतिसेवानां गुणावृद्धिवक्रतानिर्धर्मतापत्तेः । तदुक्तम्- ②'अविसुद्धस्स न वड्ढइ गुणसेढी तत्तिआ ठाइ'त्ति अइयारं जो निसे-वित्ता पच्छित्तं नेव गिण्हए । अणुज्जुओ य तब्भावो निद्धम्मो सो ग-

① अप्रायश्चित्ते च ददाति प्रायश्चित्तम् ।

② अविशुद्धस्य नैव वर्धते गुणश्रेणिः तावती तिष्ठति । अतिचारं यो निषेव्य प्रायश्चित्तं नैव गृह्णाति । अनृजुकश्च तद्भावो निर्धर्मा स गण्यते ॥

* 'सुत्ते अ इमं भणिअं अप्पच्छित्ते अ देइ पच्छित्तं ।
पच्छित्ते अइमत्तं आसायण तस्स महईओ ।।१।।
आसायण मिच्छत्तं आसायणवज्जणा उ सम्मत्तं । आसायणानिमित्तं कुव्वइ दीहं च संसारं ।।१।। ति । गृहीतुस्तु शुद्धभावाच्छल्यत्रयप्रसङ्गेनानर्थनिचयोऽनिवार्य एव । अत एव च सप्त योजनशतानि क्षेत्रतः, कालतो द्वादश वर्षाणि यावद् गीतार्थान्वेषणं सूत्रकृदभिहितं सङ्गतं भवति । न चान्तरा काले कृते का गतिः? भावशुद्ध्या सद्गतिभाजनत्वात्तस्य । ननु स एवाद्यागीतार्थादिप्यालोचने किं न ? इति चेत् न, मार्गविपरीतत्वेन परिणामासुन्दरत्वात्तस्य । सुन्दरभावोत्पत्तये एव च साधिष्ठितप्रतिमा यावदपि विहितमालोचनाविधानं व्यवहारागमे व्यवहारकोविदैः । न चैवमाकलय्य दुर्लभतां सामग्र्याः कार्यः प्रमादः । तथा सति सशल्याख्येन दुष्टमरणेन कालभावापत्तेः । परत्र देवदुर्गतिगमनं विराधकभावेन दुर्लभबोधितां चानुतेन । तस्मान्निरूपितात् प्रायश्चित्तात् शुद्धिभावः । शोधनं शुद्धिः अतिचारादिमलक्षालनान्निर्मलताऽऽत्मनः तस्या भावो-भवनं । नहि तत्र कल्पिता शुद्धिर्भवति, किन्तु यथार्थैवेति ज्ञापनाय भाव इति । न च वाच्यं प्रायश्चित्तविधानकालेऽतिचारासेवनेनैव तदा कर्मणां बद्धत्वादिकरणात् किं प्रायश्चित्तेन स्यादिति । यतोऽध्यवसायविशेषेण बन्धवत् क्षयस्यापि विधानं स्यादेव । न चास्ति सर्वकर्मानुभावतो वेद्यमेवेति नृपाज्ञा । प्रदेशानुभवस्तु यथाकथञ्चित् प्रायश्चित्तग्रहण-तदासेवनकाले भवँश्च केन निवार्यते ? । चैतत् स्वमनीषोज्जृम्भितम् । तथात्वेऽतिकष्टतमावस्थापत्तेस्तद्...

* सूत्रे च इदं भणितं अप्रायश्चित्ते च ददाति प्रायश्चित्तं ।
प्रायश्चित्ते अतिमात्रं आशातनाः तस्य महत्यः ।।१।।
आशातना मिथ्यात्वम् आशातनावर्जनात् सम्यक्त्वं ।
आशातनानिमित्तं करोति दीर्घं च संसारं ।।१।।

सम्प्रति । ते निरस्ता द्रष्टव्याः । एकविंशति वर्षसहस्राणि यावच्चरमजिनतीर्थप्रवर्त्तनवाक्यस्य वज्रलेपायमानत्वात् । न च ज्ञानदर्शनाभ्यां केवलाभ्यां तीर्थमिति वाच्यम् । * 'न विणा तित्थं नियंठेहि'तिवचनात् । सर्वथा साधुत्वापलापे च * 'जो भणइ नत्थि धम्मो' इत्यादिप्रबन्धेन तस्य सङ्घबाह्यकरणीयताप्रतिपादनादिति सूत्रानुसारेण । पञ्चदश्यां गाथायां सप्तदश्यां विंशिकायामयमधिकारः- 'ततो योगविधान'मिति । ततः-तदनन्तरं भवनिर्वेदाद्दीक्षायां गृहीतायां यावदापन्नातिचाराणां प्रायश्चित्तेन शुद्धौ कृतायामेव, व्यवच्छेदफलत्वाद्वाक्यस्य, नान्यथा । किमित्याह-'योगविधानम्'युज्यते-अवाप्यते मोक्षोऽनेनेति योगः-सम्यग्दर्शनज्ञानचारित्रात्मको व्यापारः । यदाह- चातुर्वैद्यचक्रचूडामणयोऽध्यात्मोपनिषदि-चतुर्वर्गेऽग्रणीर्मोक्षो,योगस्तस्य च कारणम् । सम्यक्त्वज्ञानचारित्र-रूपं रत्नत्रयं स च ॥१॥ (योगशास्त्रे) काशीयविबुधविजयावाप्तन्यायविशारदपदापूर्वसत्तर्करत्नरत्नाकरग्रन्थशतविधानानवद्यवेधः शक्त्यतिशयस्मारितश्रुतकेवलित्वाः श्रीयशोविजयवाचकवर्या अप्याहुः 'मोक्षेण योजनाद्योगः सर्वोऽप्याचार इष्यते' (ज्ञानसारः)। वक्ष्यति च प्रकरणकरणावगाढयशोऽम्बुपूरो भगवान् प्रकरणकारोऽपि * 'मोक्खेण जोयणाओ जोगो सव्वोवि धम्मवावारो' इत्यादि। केचित्तु 'योगश्चित्तवृत्तिनिरोध' इत्याहुः योगलक्षणम्, तन्न चारु। यतोऽत्राश्रीयते को धातुस्तैः युजिच् समाधौ 'युजंपी योगे' इत्यनयोः! यतो नैकोपि तदीयमनोरथव्रततिवृद्धये प्रभवति। आदौ समाधेर्योगाङ्गत्वेन स्वीकाराद् अङ्गाङ्गिभावो भज्येत । योगसमाध्योरन्यत्र तु धात्वर्थ एव लक्षणविरोधी, निरोधविरुद्धत्वाद्योगस्य। न चैवं भवति योगारम्भक्रियाया योगत्वम्, तदा चित्तवृत्तेरनिरोधात्, कायवाङ्निरोधयोश्च योगत्वाभावाप्तेरनिष्टतैव । न च

* न विना तीर्थं निर्ग्रन्थैः * यो भणति नास्ति धर्मः ।
* मोक्षेन योननाद् योगः सर्वोपि धर्मव्यापारः ।

वमनाग्रहप्रवृत्त्या । अनाग्रहादेव वस्तुस्तत्त्वाधिगमो भावीति हि मार्गानुगुणस्तदाशयः । अनेनैवाभिप्रायेण तेषां मह्रर्षिताभिधानमपि क्वचित् । अत एव 'तत्प्रकृतिदेवताधिमुक्तिज्ञान' मित्युपदेशकाऽऽज्ञप्तमावश्यकम् । तथैवाऽन्येषां बोधोत्पत्तेः । यथागमं वा भावनीयं भावद्भिरेतत् । तस्य एवंस्वरूपस्य योगस्य विधानमाचरणम् । न हि ज्ञानमात्रेणेष्टफलसिद्धिः, किन्तु आचारेण । यथाहि-ज्ञानहीना क्रियाऽकिञ्चित्करीति ज्ञानायोद्यमः कार्यः । एवमेव क्रियाहीनस्य ज्ञानस्यापि पङ्गुदृष्टेरिव शोकमात्रफलत्वाभ्रेष्टसाधनतेति सत्यमुक्तं-'योगविधान'मिति । एवं चाऽऽराधितसम्यग्यतिधर्मादियोगान्तस्यावश्यंभावि केवलं पर्यवसानफलं परमफलं वेति । तदाह अष्टादश्यां विंशिकायां- 'केवलज्ञानं च सुपरिशुद्ध'मिति । तत्र केवलम्-एकं मत्यादिनिरपेक्षत्वात् । शेषज्ञानानि मत्यादिसहचरितानि, नेदं तथा । यद्वा-केवलं-सम्पूर्णं, यथाहि मत्यादीनि क्षयोपशमोत्थानीति तारतम्यभाञ्जि, प्रथमतश्चाल्पतया पश्चाद्बहुबहुतरबहुतमतया प्रादुःपन्ति, नेदं तथा किन्तूत्पादकाल एवाखिलद्रव्यपर्यायसाक्षात्कारतयोत्पद्यते । अथवा केवलं-शुद्धं, यथाहि- मतिज्ञानादीनि केवलज्ञानाऽऽवृतस्य जीवस्य भवन्ति, न तथेदं किन्तु काकनाशं नाशितनिखिलानिष्टतमज्ञानावरणीयादृष्टस्य । यदि वा केवलं-निरवयवं, यथाहि-मतिज्ञानस्यावग्रहादयः, श्रुतस्याङ्गप्रविष्टाद्याः, अवधेरनुगामिप्रमुखाः, मनःपर्यवस्य चर्जुमतिविपुलमती इत्येवं भेदभिन्नता, नैवमस्य । न च वाच्यं 'सिद्धकेवलज्ञानं भवस्थकेवलज्ञान'मित्याद्यनेकभेदभिन्नत्वप्रसिद्धेरस्य नन्दीसूत्रादौ किमिति भेदरहितत्वं पापठ्यते ? इति । यथा मतिज्ञानादीनां स्वरूपतो हेतुभेदेन कार्यभेदेन च भिन्नता, न तथाऽस्य किन्तूपाधिकृत एव । उपाधिश्चात्र तद्वज्जीवावस्थाविशेष

इति 'भुजिपत्यादिभ्यः कर्मापादाने' (सि० ५।३।१२८) इत्यनेन वा अनः। न च ज्ञानस्य कथं कर्मतेति। प्रदीपवत्तस्य स्वपरावभासकत्वात्। न चानुभवापलापः कर्त्तुं पार्येत सुधिया, येनाऽस्य स्वप्रकाशकत्वमपलप्येत। परोक्षतायां च ज्ञानस्य तस्य प्रामाण्यानिश्चयान्न कथञ्चनापि प्रवर्त्तते प्रेक्षापूर्वप्रवर्त्तकः। न चास्याधिकरणता कथं, आत्मनोऽधिकरणत्वादिति वाच्यम्। कथञ्चिदभिन्नत्वाद् द्वयोः। यद्वा-वैषयिकाधिकरणमिदम्। अन्यत्र ज्ञानादवबुद्धताऽसिद्धेः। न चाहं जानेऽहं सुखीत्यादिसमानाधिकरणप्रत्ययबलादात्मनोऽहंतावगमः कथं स्याद्, ज्ञानस्यावगमत्वेनायं जानाति सुखी चायमित्येव व्यपदेशादिति वाच्यम्। तस्यापि स्वपराभासित्वात्। यदाहु:-दुःषमारजनिप्रसृततिमिरततिविघटनावाप्तयथार्थाभिधानाः श्रीसिद्धसेनार्कपादाः- 'प्रमाता स्वान्यनिर्भासी, कर्त्ता भोक्ता विवृत्तिमान्' (न्यायावतारे) इत्यादि। न चात्मनः स्वपरावभासकत्वे कोऽर्थो ज्ञानेन, तद्धि स्वपरावभासित्वेनैवाश्रीयते, तच्च स्वीक्रियते शुभवद्भिर्भवद्भिरात्मन इति वाच्यम्। सुखवानहमिति प्रत्ययवत् घटज्ञानवानहमिति ज्ञानाधिकरणा(ता)याः स्वानुभवसिद्धत्वात्। नहि युक्त्यनुभवसिद्धोऽर्थोऽलिककुतर्कभित्याऽभावमश्नुते। अलमतिप्रसङ्गेन। केवलं च तज्ज्ञानं च केवलज्ञानम्। न चैवंविधज्ञानस्यासम्भवः, येन कल्पितत्वं स्यादस्य। यतो निर्विवादं जीवो ज्ञानस्वरूपः। नहि ज्ञानमन्यस्य धर्मः,अनुकरणाभावात्। धर्मत्वे च किङ्कृता इयत्ताऽस्य, येन नाववुद्ध्यते सर्वं, न तथाविधं किञ्चित्प्रतिवन्धकं जीवानुगतं स्थितिमत् स्वभावभूतमस्ति, येन सर्वज्ञताऽस्य न वोभवीति। न च वाच्यं तर्हि यावज्जीवं केवलसद्भाव आयात इति। आयात्वभीष्टमेतत्। प्रत्यक्षविरुद्धमिति चेन्न, प्रतिवन्धकानिराकरणान्नोद्भूतम्। नहि विद्यमा-

समग्रं तथैव पदार्थवृन्दम् । यतो नहि कश्चिदेवंविधोऽर्थो वेविद्यते, यो न कस्यापीष्टोऽनिष्टो वा न स्यात् । सर्वेषां ज्ञेयत्वेनेष्टत्वाद् । भुजङ्गमनलिकाप्रवेशन्यायेन भविष्यति प्रवेशोऽस्मदुक्ताध्वनि । न च यावद्भवभावित्वमस्तु केवलस्यापि, देहादिसाधनसम्पन्नत्वात् यावत् कर्मक्षयेण निर्वाणावाप्तौ तु तदभावादेव ज्ञाननिवृत्तिरिति नानन्ता स्थितिरिति वाच्यम् । ज्ञानस्य देहसाधनत्वासिद्धेः । छाद्मस्थिकमतिश्रुतयोः कथञ्चित्तथात्वदर्शनेपि सर्वत्र तथाऽदर्शनात्, मतिश्रुतरूपपरोक्षस्यैव तथात्वात् । अत एवास्याभिमता परोक्षता अपरोक्षज्ञानवद्भिः । परैरिन्द्रियमनोभिरुक्षा-सम्बन्धोऽस्मिन्निति व्युत्पत्तेः । अवध्यादिज्ञानद्वयस्य तु छाद्मस्थिकत्वेऽपि नेन्द्रियानिन्द्रियसाधनतास्ति । यदाहुः- 'पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्ष' (प्रमाणनय०) मिति । अत एव चापर्याप्तावस्थायामप्यभ्युपगम्यते अवधिज्ञानम् । तथा च कैव वार्त्ता केवलस्य, येन तस्य जीवस्वभावभूतस्यापि देहसाधनता जाघटयेत? । न चासम्भव एवंवम्भूतस्य, जीवस्वभावत्वे तदभावात् । न च न ज्ञानं जीवस्वभावः, किन्तु बुद्धिसमवायेन तथेति वाच्यम् । आकाशेऽपि तत्समवायप्रसङ्गात् । समवाय एव च तावत्कल्पितो, न पारमार्थिकः, कुतस्तरां तत्सम्बन्धेनात्मनः सचेतनत्वम् । तथा च जडेनानात्मविदा को वादोऽस्माकं ? 'नातत्त्ववेदिवादः सम्यग्वाद' (धर्मबिन्दौ) इतिवचनात् । स्वरूपसम्बन्धे चागतोऽसि अस्मत्पथि,स्वरूपस्य कदाचनाप्यनाशात् । तथात्वे च जीवस्याप्यजीवत्वापत्तेस्तन्नित्यताया दत्त एव जलाञ्जलिर्भवता कृपाधाम्ना । न चास्तिकंमन्यानामेष पन्था नापि युक्तियुक्त इत्यलम् । 'सुपरिशुद्ध'मिति न व्यवच्छेदकं, किन्तु स्वरूपविशेषणमेव । अभिमतं च तथात्वे च विशेषणं विज्ञैः

एत्रानेके मालिन्यमर्दका: शासनोन्नत्यै। तत्र तेषां भवावतार: सार्थक:। न च सम्भवी कर्मबीजमन्तरेण तृष्णादिसम्भवेऽपि भवाऽऽगम:। यदाह्-अज्ञानपांशुपिहितं पुरातनं कर्म बीजमविनाशि। तृष्णाजलाभिषिक्तं मुञ्चति जन्माङ्कुरं जन्तो: ॥१॥ 'कर्मोदयाद्भवगतिर्भवगतिमूला शरीरनिर्वृत्ति' (प्रशम०) रित्याद्यलमतिपल्लवितेन। यद्वा-सितं-बद्धमष्टप्रकारं पुरातनं कर्म, तत् ध्मातं-विनाशितं, यैस्ते निरुक्तविधिना सिद्धा:। सिद्धी पञ्चचत्वारिंशल्लक्षयोजनायामविष्कम्भाऽष्टयोजनबाहल्या प्रान्ते माक्षिकपत्रतनुका साधिकसार्धशतकोटियोजनपरिरया या ईपत्प्राग्भारनाम्नी सिद्धालयभूता सिद्धिशिलाख्या सिद्ध, तस्यां भवा वा सैद्धा:। प्राकृतशैल्या च 'सिद्ध'त्ति। न च सार्द्धतृतीयद्वीपभाविनां केवलिनां शैलेश्यन्तक्षणेऽखिलादृष्टापगमभावान्निष्क्रियत्वात् कथं गमनसम्भवस्तां यावत्?। चरमगुणचरमक्षणाक्षुण्णक्रियाप्रयोगेन मुक्तेपुवत्, कर्मसङ्गरहितत्वात् समन्तादावेष्टितातिकठिनमृत्तिकालेपहानावाप्तोदकोपरितनभागगमनकार्यलाबुवत्, आनुपूर्व्यादिबन्धनविच्छेदच्छिन्नबन्धनैरण्डवत्, धूमाग्न्यादेरिव स्वाभाविकोर्ध्वगमनस्वभावत्वाज्जीवस्य तथागतिपरिणामाच्च सिद्धानां सिद्धिं यावद्गति:। तथा च येऽभिदधति-गुणसत्त्वान्तरज्ञानान्निवृत्तप्रकृतिक्रिया:। मुक्ता: सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिता:॥ इति निरस्ता:। सर्वव्यापिता नार्वाक् युक्तियुक्ता। न च पश्चादपि सम्भाविनीति। तथा तत्र जीवानां जीवत्वेनाऽवस्थानास्थानात्तेऽपि निरस्ता:। य आहु:– 'रागादिवासनामुक्तं, चित्तमेव निरामयम्। सदाऽनियतदेशस्थं, सिद्ध इत्यभिधीयते' ॥१॥ चित्तस्य नित्यत्वे जीवस्यैव नामान्तरम्। न च वासनामुक्तस्य पुद्गलकृताऽधोगतिविरहादूर्ध्वगमने तथास्वाभाव्याद् गमने बाधकमुद्घोष्यते

ऽन्येषां योगप्रयोगतो लोके । न च सिद्धानां सोऽस्ति, कथं च सा तस्य भवति गतिः ॥१॥ पाषाणाद्या लोकेऽधस्ताद्गतिमन्त ईक्ष्यन्तेऽलघवः । अगुरुलघवश्च सिद्धा निष्कर्माणो न यान्त्यधः तस्माद् ॥२॥ जीवो नैतत्स्वभावोऽधोगमनार्हो यथा भुवि स्कन्धाः । गच्छति ततोऽपि नाधः पुद्‌लरहिताः समे सिद्धाः ॥३॥ न चैतत् स्वान्तव्याकृतम् । यदाहुर्वाचकोत्तमाः 'नाधो गौरवविगमादशक्य-भावाच्च गच्छति विमुक्तः' । तथा 'योगप्रयोगयोश्चाभावात्तिर्यग्न तस्य गतिरस्ति' । (प्रशम०) ननु माऽस्तु धर्मगौरवयोगाभावाच्च ऊर्ध्वगत्याद्याः, तिष्ठन्तु परमत्रैव निर्व्याबाधाः सदा सिद्धाः इति चेत् । न तत्प्रयोगाश्रयानुबन्धाद्यभावतो भवतिः स्थितिः तिर्यग्यतोऽस्ति न स्थितिरेतान् विरहय्य कस्यापि । तदुक्तं- 'न स तिष्ठत्यनिबन्धादनाश्रयादप्रयोगाच्च' । तत्सिद्धं सिद्धानां सिद्धिस्थायित्वमत्र नारेका । ननु सिद्धयपवरकान्तर्बद्धाः किंसौख्यसाधनाः सिद्धाः ? । न स्त्रीभोजनभोगो, न चास्ति गोष्ठी सहोत्तमैस्तत्र । तन्न एते यद्बद्धाः कायाभावेन नास्ति गमनेच्छा । मोहाभावान्न रतं, न भोजनं तदृते यतस्तुष्टाः । अव्याबाधा औत्सुक्यवर्जिताः कर्मदुःखनिर्मुक्ताः । आत्मरता योगिवत्ते शान्ता लोकेतरावलोकोत्काः । न च वन्ध्या जानीते गुर्वी प्रसवस्य वेदनाम् । यद्वा म्लेच्छो न नागरिकसुखमाख्यात्याख्यातुकामोऽपि । अत एवैतदाख्यातं प्रशान्तेनान्तरात्मना । शब्दे रूपे रसे गन्धे स्पर्शे स्वेच्छातिगे सुखं । वेद्यते यन्नरैरक्षैस्ततोनन्तगुणं तु शम् ॥ तेषां सूत्रे यतः प्रोक्तो भागकारविधिरयम् । तेषां सामयिकः सौख्यराशिः समयैस्त्रिकालगैः । गुणितोनन्तवर्गेण भक्तो मायान्न विष्टपे ॥ समग्रं सुरसौख्यं वा त्रैकालिकं च ताडितम् । अनन्तेन पुनस्तस्मिन् वर्गैस्तावद्भिराहते । सम्पद्यते सुखं यावत्तन्न सिद्धसुखैः समम् ॥ इत्यलं प्रसङ्गानुप्रसङ्गेन । तेषां सिद्धानां विभक्तिः- प्ररूपणा

दत्राज्ञानताविषं विनष्टुं समीचीनतामञ्चति, न तु ज्ञानमपीति । न चेन्द्रियसाधनमेव ज्ञानम् । आत्मनस्तद्गुणत्वेन अन्यथापि समुत्पादाभिगमात् । आः ! प्रत्यक्षविरुद्धमेतज्जंजल्प्यते जाल्मेन यदनिन्द्रियसाधनं ज्ञानम् । शान्ति कुरु, न क्रोधरोधरुद्धान्तःकरणे रोक्ष्यति अपरिमितानन्दनिदानभूता बोधवल्लरी । किमुत्पादकमिन्द्रियं न चेत् ? साधनता तु यावददृष्टावृति साहाय्यकारि स्यादेव । नह्यतैमिरिकः कोऽप्युपदधात्युपनेत्रे । तथा च नोपनेत्रो न पश्यति । किञ्च-नेश्वरस्यानन्तज्ञानान्वितत्वेपि शरीरेन्द्रियादिकमस्ति किञ्चिदपि । न च व्यक्तिविशेषे तथोपगमो न्याय्यः । नहि कुत्राप्याकाशावयवे दृष्टं कुसुमं, सम्भवित्वे च किं क्षतमात्मनो मुक्तात्मनो, येन तस्य ज्ञानाभाव आपाद्यते भवद्भिः ? । श्रुतिप्रतिपादितनिर्धर्मत्वमात्रेण नहि युक्तियुक्तमिष्टव्यं च ज्ञानाद्यपलपनीयं श्रुतालापलोकनसहृदयैः । तस्यादृष्टार्थकधर्मशब्दाभावेन योजयितुं शक्यत्वात् । तथा च अनेकश्रुतिभिरधिरुह्यमानो विरोधोऽपि परिहृतः स्यात् । श्रूयन्ते च श्रुतयः सकर्णैः संसारातीतानां ज्ञानसुखादिप्रतिपादका अनेकाः । तथाहि-नित्यं विज्ञानमानन्दं ब्रह्मेति । अत्र ब्रह्मस्वरूपबोधनमेव विज्ञानानन्दादित्वेनोपपादितम् । न चान्यथाऽऽनन्दमिति नपुंस्त्वं स्यात् । ननु विज्ञानमज्ञानाभावे,आनन्दश्च दुःखाभावे उपचरितो ज्ञेय इति । चेत् ननु किमिति सुखमेवाङ्गीक्रियते पदार्थतया किं वा ज्ञानस्य भिन्नता गुणत्वेन ? भवन्नीत्या अभावेनैव द्वयोश्चरितार्थत्वात् । भिन्नपदार्थत्वे स्वीक्रियमाणे नात्र किञ्चद्बाधकं समस्ति येनोपचरितकल्पना कल्प्या स्यात् कल्पविदां 'मुख्यार्थबाधे सति प्रयोजने च भेदाभेदाभ्यामारोपितो गौण' (काव्यानु०) इति गौणलक्षणत्वात् । न चात्रोपचारेऽस्ति च किञ्चिदपि प्रयोजनम्, प्रतिपादिता च कारणकार्यान्वयभावनियमेन

ते हि न सुखदुःखकारणसातासातवेदनीयस्य घातिकर्मता पापठ्यते ज्ञानावरणीयादिवत्, किन्त्वघातितैव । तथा च कथं सुखात्मन आत्मन आवारकत्वं स्यादिति वाच्यम् । यथाहि-ज्ञानसर्गस्य सत्त्वस्येन्द्रियादि साहाय्यकर्त्तृ तथा सातादेरात्मस्वभावाविर्भावे साहाय्यकारित्वाक्षतेः न किञ्चित्क्षुण्णम् । सुखस्यात्मस्वभावत्वे घातितापि पर्याप्तिवन्नास्य गुणाघातात् । असातस्यापि वेदनस्वभावाविर्भावुकताऽस्त्येव, सातसाधनप्रमेलप्रभविष्णुत्वाच्चास्यौदयिकता । न चैतदिन्द्रियाणामस्ति विषयवितानापादकत्वम्, येन तस्यौदयिकता भवेत् । सातवेदनीयमपि सुखविशेषप्रभव एव कारणम्, तद्विशेषेण तद्विशेषजननात् । यथाहि-अत्रैवानुभूयमानं साम्यसुखं न तदुदयजन्यम्, तथैव सिद्धिसुखस्यापि नादृष्टसाधनता । तथा च नादृष्टाभावे सुखाद्यभावप्रसङ्गः सम्पादयितुं शक्ष्यते शक्तिमद्भिरपि भवद्भिः । तादृशसिद्धिसद्भावेपि तदर्थिकप्रवृत्त्या वैराग्यव्याहतिरित्यपि न सम्यक्, मुनिसत्तमानां मोक्षभवविषयकसमानवृत्तिमत्त्वात् । यदपि स्यात्तत्र रागमत्त्वं, न तथापि वैराग्यव्याहतिः,वैषयिकसुखदुःखविरक्तत्वस्यैव वैराग्यत्वात् । अन्यथा साम्यसुधापूरप्लावितचित्तवृत्तीनां वर्षमात्रपर्यायेण परमशुक्लभावानां योगिनामनुत्तरसुरातिगसुखभाजनानां न स्याद्वैराग्यलेशोपि । न चाग्रतो नैवेच्छा, तदविनाभावित्वस्यैव प्रवृत्त्याऽनुमीयमानत्वात् । अत एव 'दुःखद्विट् सुखलिप्सु'रित्यत्र कारिकायां कारिकाकृत्योपनिबन्धयाञ्चकार मोहान्धत्वादित्यस्य हेतुताम् । अन्यथा सांसारिकरागपरिकरितवद्रागप्रेरितत्वेन प्रवृत्तेर्न स्यात्कदापि भवाभिनन्द्यादिवदात्मनिर्मलता । न चेष्टसाधनत्वज्ञानमृते प्रवर्त्तते कश्चिद्विपश्चित् । इष्टं च दुःखासम्भिन्नाभिलाषापनीताविच्छेदिसुखमयं

कथङ्कारं भवति नाशः,अनन्तत्वेन व्याप्तेरनादेरिति वाच्यम् । विचित्रा हि भावाः। केचित्तथाविधा अपि न सर्वे तथा। नहि अनादित्वमनन्तत्वेन विनानुपपन्नम्, न च साहचर्य व्याप्तिः, स्वीक्रियते च सर्वैरपि स्वस्वशास्त्रनिष्णातैः प्रागभावस्यानादिसान्ता स्थितिः। भावोऽपि चातीतकालाख्योऽनादिसान्ततयाऽभिमत एवाखिलैरपि विदितवाङ्मयव्याख्यानैः। तद्वदियं कर्मणः स्यात्तर्हि को दोषः?। किञ्च-नेदं स्थितिमपेक्ष्यानादिकमपि, सरित्स्रोतस इव प्रवाहेणैवानादित्वात् । न तिष्ठति च किञ्चिदपि कर्म सप्ततिसागरोपमकोटिकोटेरधिकम् । ननु भवतु मोक्षभावः, परं नियमोऽयम्-औत्पत्तिकस्य नाशेनाविनाभाव इति । तथा च तेषामपि वाच्योऽन्तः कालेन कियतापि हीति न वाच्यम् । तादृशव्याप्त्यसिद्धेः, प्रध्वंसाभावेनाऽनागतकालेन च व्यभिचाराच्च। अन्यच्च-नाबीजमङ्कुरः, न चास्य कर्मलेशोपि वरीवर्त्तते, येन अवाप्नुयादशुभकर्मकल्मषोदीर्णक्लेशाऽऽजवंजवीभावभारभृति संसारे जन्मेति । अभिमतं चैतदन्यैरपि 'अनावृत्ते'रिति वाक्येनेत्यलं प्रसङ्गेन । परमता च सुखस्य अस्मादृशां ज्ञानाविषयत्वात्, ज्ञाततत्स्वरूपैरपि सर्वदर्शिभिरनभिधेयत्वादुपमाऽभावतो व्यक्तमभिधातुमशक्यत्वाच्च । मदिरोन्मत्तजात्यन्धपुरुषो न कदाप्याख्यातुं शक्नोति सूर्यस्वरूपम् । शेषं स्पष्टं निरूपितमर्वाग् मा विस्मार्ष्ट । सुखमिति । सुखयति-आत्मानं तदुपभोक्तारमाह्लादयतीति सुखम् । यद्यपि सामान्यापेक्षयोच्यते सुखशब्देन सातवेदनीयोदयोद्भव आत्मपरिणामस्तथापि तत्त्वतो न तस्याह्लादकत्वं विवेक्यात्मनः, किन्तु स्वस्वरूपरमणतोद्भवस्यैव परमाह्लादजनकत्वम् । तत एव च सर्वैरपि परलोकाङ्गीकारकमतवादिभिस्तदर्थं क्रियते प्रयत्नः । सातवेदनीयोदयसम्पाद्यसुखस्य तु विभावत्वेनासातोदयसम्पाद्यदुःखवेदनवद् हेयत्वानति-

स्त्रीत्वविवक्षायां चापि सिद्धं विंशतिकेत्यपि । भवति च षोडशका-ष्टक-पञ्चाशकादिवत् सङ्ख्यामानेन प्रकरणाभिधा । अत एव च नाऽऽदौ निर्दिष्टमभिधेयनिर्देशाधिकारे प्रकरणाभिधानमभियुक्तैः । गाथाभिः, 'चृगौ षष्ठोजो न्लौ या पूर्वेऽर्धेऽपरे षष्ठो लार्या गाथा' (छन्दोनु ४।१) अत्र वृत्तिः- नौजेज इतिवर्त्तते, चृगौ-चगणसप्तकं गुरुश्चार्द्धे यस्याः सा आर्या (चगणश्च चतुर्मात्रिको गणो मात्राछ-न्दसि पठ्यते) अत्रापवादः- पूर्वेऽर्ध्रे षष्ठो जगणो न्लौ वाऽपरेऽर्धे षष्ठो गणो लघुः कार्यः । अर्द्धग्रहणाद् आर्यादिषु पादव्यवस्था नास्ति । तेन 'द्वीपादन्यस्मादपि' इत्यादौ गणत्रयस्यान्ते लघोः गुरुत्वं न भवति । आर्यैव संस्कृतेतरभाषासु गाथासङ्ज्ञेति गाथाग्रहणम् । विकल्पसङ्ख्या तु छन्दोनुशासनाच्छन्दश्चूडामण्यादेरेवावधार्या । आर्यायां वक्तव्यान्तरमाह- 'षष्ठे न्ले लाद् द्वितीयात्सप्तमे चाद्यात्प-दमन्यार्द्धे च पञ्चमे' (छन्दोनु० ४।२) । अत्रापि वृत्तिः-"पूर्वार्द्धे षष्ठे गणे न्ले सति द्वितीयाल्लादारभ्य पदं भवति, आद्यलघोर्विरतिः सप्तमे गणे न्ले त्वाद्याल्लघोर्विरतिः षष्ठगणान्ते यतिरित्यर्थः । अन्यार्द्धे-द्वितीयेऽर्द्धे पञ्चमे न्ले सत्याद्याल्लात्पदं चतुर्थगणान्ते यति-रित्यर्थः" । यद्यप्यत्र गणत्रयान्तविरत्यादिना पथ्यादयो भेदा सम्पद्यन्ते, परं नाऽत्र तत्सूक्ष्मेक्षिकोपयोगिनीति सा तत एवावसेया इत्येवमुपदर्शितप्रकारेण लक्षणेन या लक्षिताश्छन्दोविशेषा गाथ इत्युच्यन्ते । ताभिः । नात्राऽन्या छन्दोविचितिरनुष्टुबुपजात्याद्य इति छन्दोऽभिधाननिर्देशः, तस्या एव बालयोग्यत्वात् । देश दोहा-चतुष्पदिकादिवत् सुखोच्चार्यविवोधार्थप्राप्तिधारणादिभा वात् । कीदृशास्तेऽधिकारा ? इत्याह- 'फुडवियडपायडत्थ'त्ति, विंशत्या गाथाभिः प्रतिपिपादयिषितास्ते विंशतिरप्यधिकाराः स्फुट-विकटप्रकटार्थाः, न शब्दगहना नार्थगहना न युक्तिगहना अर्थाः

समग्रे गाथाशतचतुष्केन विंशतिरधिकाराणामिति पर्यवस्यति । अन्यथा प्रतिविंशिकमधिकाराणां विंशतिरित्यनर्थ आपद्यते इति सुष्ठूक्तं-प्रत्येकप्रत्येकमिति । अथ सप्तमगाथायामुक्तं- 'यत्तद्देश-दर्शनात् कौतुकेन भविष्यति सूत्रे प्रत्युत प्रवृत्तिर्न तु तद्व्यवच्छेदो यतोऽयं तस्मादुद्धृत'मिति तत्स्मरन्नाह श्रोतृणामुद्देशज्ञापनायैतत्प्र-करणबोधस्य –

**एए सोऊण बुहो परिभावंतो उ तंतजुत्तीए ।**
**पाएण सुद्धबुद्धी जायइ सुत्तस्स जोगुत्ति ॥१७॥**

एतान्–पूर्वं प्रक्रान्ततया समीपतरान्, यद्वा-हृदिपरिवर्त्तमानतया वक्ष्यमाणा अपि समीपतरास्तान् अधिकारान्, श्रुत्वा-श्रवण-विषयीकृत्य । अनेन श्रवणविधिराक्षिप्तः । पूर्वगाथोक्तस्फुटविकट-प्रकटार्थपदेन तावच्छुश्रूषोत्पादिता एतस्यैव प्रकरणस्य लघुनोपायेन विवक्षिताधिकारपरिज्ञानदर्शनात् । अद्वेषस्तु न भवत्येव बुभुत्सोः यस्य तु पूर्वव्युद्ग्राहितत्वेनाभूत् स पूर्वमेव प्रकरणस्योपकारितादर्शनेन निरस्तः सुतरां दूरतः, क? इत्याह- बुधः- विदितशास्त्रसतत्त्वः, न च मतिविबोधनार्थकत्वादेतत्प्रकरणस्य 'बुध' इत्ययुक्तमुच्यते, बुध इत्यस्य कर्तृत्वात् श्रवणप्राक्काल एव बुधत्वसम्भवान्न च वाच्यं-श्रुत्वा बुध इति वाच्यम् । मन्दमतिः स एवात्र ग्राह्यो यो व्याक-रणकाव्यन्यायनिपुणोऽपि समयतत्त्वावबोधविकलः-तथा च वक्ष्यति-परिभावयंश्च तन्त्रयुक्त्येति । तथा चाप्तप्रणीतप्रवचनापेक्षया मन्दमतिताऽपरशास्त्रापेक्षया च बुधतेति न कोऽपि दोषलेशोऽत्र । यद्वा-मन्दमतिरिति कर्त्ताऽध्याहार्यः । न चाऽध्याहारो दूषणम्, व्याख्याङ्गत्वात्तस्य क्रियया च कर्त्तुरवश्यमाक्षेपात् । तथा च प्रकरणस्यातिशयिता ख्याप्यते यत् श्रुत्वैतद् बुधत्वं प्राप्नोति श्रोता । तथा च बुध इत्यत्र बुधः सन्निति व्याख्येयं । तन्त्रयुक्तयोप्यत्र निबद्धा एव, याभिः स्यात् परिभावनेति नात्रापि दोषलेशः । अथवा

स्कुर्वन् प्रायेण शुद्धबुद्धिरित्येवं व्याचक्षते । तत्र 'प्रायेणे'ति विशेषणस्यापि युक्तियुक्ततामाचक्षते । एवं यत्र सर्वः श्रोतैकान्तहितकृच्छास्त्रशिष्टशासनश्रवणनिरतोप्यवाप्नोति शुद्धबुद्धिरूपं धर्मम् । यदाहुर्वाचककुलावतंसाः-'न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । अभिमतं चैतत्प्रकरणकर्त्तृभिरप्यन्यत्र । यदुक्तं तैरेव पूज्यैः-'एकरसमपि तद्वाक्यं वक्तुर्वदनाद्विनिःसृतं तच्च । नानाभावं गच्छति पृथक् पृथग् भावमासाद्य'॥१॥इति । न चैवमपि विरोधलेशोऽपीक्ष्यते । एवंविधः सन् किमित्याह'-सूत्रस्य योग्य' इति । तत्र सूत्रयति-विमुञ्चति अल्पाक्षरैरपरिमितानर्थानिति सूत्रम्, 'सूत्रण् विमोचने' इतिवचनात् । 'अच्' (५।१।४९) इत्यचि सूत्रम् । पठ्यते च- ® 'सव्वनईण जइ हुज्ज वालुया सव्वोदहीण जं उदयं । तत्तो अणंतगुणिओ अत्थो इक्कस्स सुत्तस्स ॥ इति । अत्र वालुकानां कणा उदधीनां च विप्रुष इति सङ्ख्यायामसङ्गतिः । स्पष्टं चेदमाद्याङ्गाऽऽवर्त्तसूत्रादिव्याख्या तद्गमव्याख्याऽवगन्तृणाम् अत एव चापरिमितातिशयितज्ञानवत्पुरुषपराक्रमजन्यमेवैतत् । ® 'सुत्तं गणहररइयं तहेव पत्तेयबुद्धरइयं च । सुयकेवलिणा रइयं अभिण्णदसपुव्विणा रइयं' ॥१॥ इत्यादिना प्रतिपादितम् । निरूप्यते चात एवास्यानुयोगविधिः । ® 'सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ । तइओ निरवसेसो एस विही होइ

® सर्वनदीनां यदि भवेयुः वालुकाः सर्वोदधीनां यदुदकम् ।
तस्माद् अनन्तगुणितोऽर्थ एकस्य सूत्रस्य ॥१॥

® सूत्रं गणधररचितं तथैव प्रत्येकबुद्धरचितं च ।
श्रुतकेवलिना रचितं अभिन्नदशपूर्विणा रचितम् ॥

® सूत्रार्थः खलु प्रथमः द्वितीयो निर्युक्तिमीश्रितो भणितः ।
तृतीयो निरवशेष एष विधिः भवति अनुयोगे ॥

ननु के ते गुणाः? येन बुद्धेः शुद्धिः स्यात्,स्याद्वा तत्त्वज्ञानयोग्यतया मूत्रयोग्यतेति चेदाह-तान् नियमभूतान् गुणान् न यान्विना भवति तत्त्वज्ञतेति –

मज्झत्थयाइ नियमा सुबुद्धिजोएण अत्थियाए व ।
नज्जइ तत्तविसेसो न अन्नहा इत्थ जइयव्वं ॥१८॥

तत्र मध्यं-अन्तरालं प्रस्तावाद् रागद्वेषयोः तत्र तिष्ठतीति मध्यस्थः। 'आतो डोऽह्वावाम (५।१।७६)'इति डे मध्यस्थः- तत्त्वावबोधप्रतिबन्धकीभूतरागद्वेषविकल इत्यर्थः । न चावाप्नुयात् नवीनवधूटीवधूरागरक्त-गोमयव्यञ्जनास्वादकवणिक्पुत्रवज्जातातिरागो भव्यमपि धर्मं तद्वोधं वा। अत एवाप्रशस्तवासनावासिता ये अवाम्याः ते अयोग्या दर्शिता दृष्टादृष्टार्थदर्शननिपुणोपदेशकैः । नहि सीधुवासिते घटे किञ्चिन्निधीयते धीनिधिभिः भोज्यादिर्घृतादिर्वा । पापठ्यते चातः प्रवचनप्रभावनापरायणैः परमपुरुषैः-'कामरागस्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपी'-॥(वीतराग०) ति। युक्तं चैतत् संसारानित्यतादिभावनौषधेन कामरागस्नेहरागाऽऽमयनिवारणस्य सुकरत्वाद् । दृष्टिरागस्तु जलेनौर्ववह्निवद्यात्येव भावनाभिर्वृद्धिम् । तद्वद् द्विष्टोऽपि नोपलभत एव किञ्चिदपि भावुकं परमभावुकादपि । यथाहि-कर्पकाधमोऽशेषाङ्गिसाधारणाऽसाधारणहितकरणकठिनात् श्रीमदर्हतो महावीरादप्यवापाऽवपातं लब्धस्यापि गुणरत्नमकराकरायमाणश्रीगौतमगणधरादनर्घधर्मरत्नस्य। यथा वा चिराज्ञानतमस्ततितिरोहितहिताहितविचारविलोचनलोकाऽऽलोकनोद्भूताद्भुतकृपापारावारप्रवर्त्तितशासनस्य युगादिप्रभोः परमप्रभावान्वितपरमपुरुषार्थदेशनदक्षदेशनायाम् अत्राप्स्यद्वासुदेवचक्रवर्त्तिजिनेश्वरमदोन्मत्तमरीचिमार्गितमार्गावितारनिर्मितदुर्भाग्यदुर्भाग्यदुर्भगकपिलः । आस्तामन्यत्, तावज्जिनेश्वरस्याप्यखिलगुणाकरस्य स्तुतिरपि रागद्वेषाभ्यां स्वतन्त्रहे-

भावी च सति माध्यस्थ्ये तत्त्वावबोधो गाढमिथ्यात्विनोऽपि, प्रदेशिराजवत् । न चेयं मध्यस्थता वृश्चिकोत्पत्तौ वृश्चिकस्येवानैकान्तिकहेतुतां दधतीत्याह-नियमाद्-अवश्यंतया, न भवति हि तत्त्वावबोधोऽन्यथा, येनेयमनैकान्तिकी भवेत् । इदं च पदं गृहदीपकन्यायेन सर्वत्र योज्यम् । न च वाच्यं व्यवच्छेदफलत्वाद्वाक्यस्य,अनुक्तेप्येतस्मिन्नभविष्यदेव नियमः, किं स्पष्टोच्चारणेन, न हि व्यवच्छेद्यं व्यवच्छिद्यतेऽन्तरा विधेयनिरूपणमिति । अत्र 'नियमादि'-तिपदेन ज्ञापयति, यदुत-यथायोग्यमेवावधारणविधिर्विज्ञेयो विधिनिपुणै;ःअन्यथैक आत्मैको दण्ड इत्यादि-स्वसमयार्थप्ररूपकपटुपदानां व्याख्यानेऽध्याहार्यमाणेऽवधारणे भवत्येव परसमयवाच्यताऽऽपातः । न च केवलं मध्यस्थतैव पदार्थतत्त्वावगमनपटीयसी, तस्या मोहमहाराजसामन्तास्पददर्शनमोहनिराकरणप्रत्यलत्वादित्याह- 'सुबुद्धिजोएण'त्ति । सुष्ठु-सज्ज्ञानावरणह्रासमुत्था महोदयनिबन्धना,नतु विपर्यप्रतिभासाऽऽत्मपरिणतिमज्ज्ञानयुगलवद् अज्ञानावरणज्ञानावरणापायोद्भवा, तयोर्हि हेयत्वाद्यनिश्चयात् पातादिपारतन्त्र्यान्न कापि पारमार्थिकी परमार्थप्राप्तिवल्लरी वल्गते चित्तमहीरुहे, तादृशी या बुद्धिः- प्रतिभा मतिज्ञानवाच्या, तस्या एव श्रुततत्त्वावधारणधौरेयत्वाद् । उच्यते च-'श्रुतं मतिपूर्वं' (तत्त्वार्थ०)मिति । न चात्र पूर्वकता पूर्वक्षणवृत्तित्वमात्रा किन्तु निमित्तभूता श्रुतस्य, धारणाहेतुकत्वनियमात् । भवति धारणावत एव श्रुतोद्भवः, वाच्यवाचकभावसंस्पृष्टार्थग्राहिणः श्रुतत्वेन प्रतिपादनात् । वाच्यवाचकभावावधारणमन्तरेण च न वाच्यवाचकयोर्वाच्यवाचकत्वेनावगतिरिति । अत एव पठ्यते-[1]'अक्खरलंभेण समा ऊणहिया हुंति मइविसेसेहिं'ति । तस्मा योगः- प्राप्तिः तत्प्रतिबन्धककर्मक्षयोपशमेन । ननु या

[1] अक्षरलाभेन समा ऊनाधिका भवन्ति मतिविशेषैः ।

द् गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥१॥ तथा 'नारककृतप्रवासोऽप्याप त्रिदशालयं प्रदेशिनृपः। महिमाऽचिन्त्यः स गुरोः केशिकुमारस्य वृद्धस्य' ॥१॥ आर्षेऽपि-पुज्जा जस्स पसीयंति, संवुद्धा पुव्वसंथुआ। संपुण्णं लाभइस्संति, विउलं अट्ठियं सुयं ॥१॥ न चानेवंविधस्यावगमो भवति प्रशस्यः। यदाह—'नहि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम्। प्रकटितपश्चाद्भागं पश्यत नृत्यं मयूरस्य ॥१॥ उक्तं च पूज्यैरेवान्यत्र-॥ 'गुरुमूले सुयधम्मो' तथा 'सुंदरगुरुजोगो विय जस्स तओ एत्थ उचिओ'त्ति। स्पष्टसुगुरुपदानुच्चारणं तु गीतार्थस्यैव देशनार्हत्वप्रतिपादनाय। यदाह— ॥ 'अगीयत्थस्स वयणेणं अमियंपि न घुट्टए। गीयत्थस्स उ वयणेणं विसं हालाहलं पिबे'॥ धर्मपरिपि — जं जयइ अगीयत्थो जं च अगीयत्थनिस्सिओ जयइ। वट्टावेइ य गच्छं अणंतसंसारिओ होइ ॥ पूज्या अपि— अगीयत्थस्स संसग्गिं सव्वं तिविहेण वोसिरे। मुक्खमग्गपहे विग्धं पहंमि तेणगा जहा ॥ धर्मकथनावसरेऽपि 'धम्मो जिणपण्णत्तो विबोहणो भविअपुंडरीयाणं। संसारसमुद्दमहणो पगप्पजइणा कहेयव्वो' ॥ अगीतार्थस्तु 'अन्नं कुदेसणाए कट्ठयरागंमि पाडेइ। इत्यादि प्रोचिवांसः प्रवचनप्रभावका इति सुष्ठूक्तं-'सुगुद्धियोगेन'-

॥ पूज्या यस्य प्रसीदन्ति सम्बुद्धाः पूर्वसंस्तुताः।
सम्पूर्णं लम्भयिष्यन्ति विपुलमर्थिकं श्रुतम् ॥१॥

॥ गुरुमूले श्रुतधर्मः। सुन्दरगुरुयोगोऽपि च यस्य तकः अत्र उचितः।

॥ अगीतार्थस्य वचनेन अमृतमपि न पिबेत् ॥ गीतार्थस्य तु वचनेन विषं हालाहलं पिबेत् ॥ यद् यतते अगीतार्थो यच्चागीतार्थनिश्रितो यतते वर्तयति च गच्छं अनन्तसंसारिको भवति। अगीतार्थस्य संसर्गं सर्वं त्रिविधेन व्युत्सृजेत्। मोक्षमार्गपथि विघ्नं पथि स्तेनका यथा ॥ धर्मो जिनप्रज्ञप्तो विबोधनो भव्यपुण्डरीकाणाम्। संसारसमुद्रमथनः, प्रकल्पयतिना कथयितव्यः ॥

स्त्वयि नाथ ! दृष्टयः । न च तासु भवान् विदृश्यते, प्रविभक्तासु सरित्स्विवोदधिः ।। अन्यच्च- तैर्गृहीतमत इत्यपि न निषेध्यम् । यत आहुः– 'सुनिश्चितं नः परतन्त्रयुक्तिषु, स्फुरन्ति याः काश्चन सूक्तसम्पदः । तवैव ताः पूर्वमहार्णवोत्थिताः, जगत्प्रमाणं जिनवाक्यविप्रुषः ।।१।। तथा [1] जयइ सुयाणं पभवो' अन्यदपि 'सव्वप्पवायमूलं बारसंगं जिणेहिमक्खायं' इत्यादि । तस्यास्तिकस्य भावो जात्यर्थे ताप्रत्यये आस्तिकता- जीवास्तित्वाद्यङ्गीकारिका मतिः । यदाऽऽह[2]अत्थि अविणासधम्मा करेइ वेएइ अत्थि निव्वाणं । मोक्खोवाओ अत्थि उ छ सम्मत्तस्स ठाणाइं'।।१।।ति । तयाऽऽस्तिकतया । अत्रापि 'नियमादि'ति पदयोजना पूर्ववत्कार्या। तदभावे हि देशोनदशपूर्वधारकाणामभव्यानां न किञ्चित्सुबुद्धियोगेऽपि भव्यभावप्राप्तिरवलोक्यते । न च वाच्यं तेषां तत्त्वज्ञानमभूदेवेति, तादृशपरोपदेशमात्रकुशलज्ञानेन नास्त्यधिकारः, अनन्तशोऽवाप्तपूर्वत्वात् । न चैतदसिद्धम् । [3]'सव्वजिवाणंपि य णं अणंतसो गेविज्जगेसु उववाओ'त्ति वचनात् । न च तद् यतिलिङ्गग्रहणमन्तरा, न च तत्र न द्रव्यतः श्रुतावगमः । अत एव च देशोनदशपूर्वी यावद् भजनोक्ता सम्यक्श्रुतस्य

[4] चउदस दस य अभिन्ने नियमा सम्मं च सेसए भयणे'त्यादिना। तस्य तावत् श्रुतस्यावगमे न तत्त्वतत्त्वश्रद्धानं तेषां, निर्वाणश्रद्धानाभावात् । आस्तां श्रद्धानं, शङ्कापि तेषां निर्वाणविषयिणी न स्यात्,

---

[1] जयति श्रुतानां प्रभवः । सर्वप्रवादमूलं द्वादशाङ्गं जिनैराख्यातम् ।

[2] अस्ति अविनाशधर्मा करोति वेदयति अस्ति निर्वाणम् । मोक्षोपाय अस्ति तु षट् सम्यक्त्वस्य स्थानानि ।।

[3] सर्वजीवानामपि च अनन्तशो ग्रैवेयकेषु उपपातः ।

[4] 'चतुर्दश दश च अभिन्ने नियमात् सम्यक् च शेषके भजना ।

भट्टारकैरपि-'विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञान'मित्यादि। व्याख्याप्रज्ञप्तावपि व्याचख्युर्व्याख्याव्याख्यातव्याख्येयव्याख्येयाः- 'सुस्सूसा सवण नाणे' इत्यादिसङ्ग्रहगाथया। तत्त्वानि-जीवादीनि, तेष विशेषः- यथावस्थितं जडादिव्यावृत्त्या स्वरूपम्। एकतत्त्वशब्द-लोपाद्वा तत्त्वानि-सारभूतानि, नत्वन्यैश्छलजातिनिग्रहस्थानानीव कल्पितसमवायादीव प्रामाण्यादिभेदवद् यथा स्वमतिकल्पितम्। अनन्तर्भावनीयान्येवैतानीति वा तत्त्वानि। नह्यन्ययूथिकप्रतिपादित-षट्-षोडश-चतुर्विंशतपदार्थवत् एतानि क्वचिदप्यन्तर्भावयित्वा न्यूनानि कर्त्तुं पार्यन्ते। न च वाच्यं आश्रव-संवर-निर्जरा-मोक्षाणा-मस्त्येवाऽन्तर्भावो जीवाजीवयोरिति। परमार्थेन तत्त्वद्वयस्यैव प्ररूपणात्, आश्रवादीनां भेदेनोपन्यासस्तु साध्यतापन्नपरमपदप्रति-बन्धक-हेतुतादर्शनार्थमिति न तत्त्वव्याघातः। यद्वा-नैष विशेषोऽत्र बालबोधनीये। अन्वयेन हेतुत्वेऽवधारितेपि पूर्वं 'नियमादि'ति पदाद् व्यतिरेकेण हेतुत्वावधारणायाऽऽह- 'न अन्नह'त्ति। अन्यथा पूर्वोक्तमाध्यस्थ्यसुबुद्धियोगास्तिक्यानामभावे न तत्त्वविशेषावगमो भवतीति तु स्वधिया सुधियाऽध्याहार्यम्। सुविवृतश्चायमर्थः पूर्वं माध्यस्थ्यादीनामन्वयतानिरूपणे इति न पुनश्चर्च्यते। इत्थं वस्तुस्वरूपोपदर्शनेन ज्ञायते एव बुधैरेषामुपादेयता, इष्टसाधनता-कृतिसाध्यता-ज्ञानाधीनत्वात्तद्बुद्धेः, परं प्रस्तुतप्रकरणस्य मन्दमति-विबोधनार्थकत्वादाऽऽह स्पष्टं विधेयोपदेशम्-'इत्थ जइयव्वं'ति। इह सप्तमीबहुवचनान्तात् त्रव्विधाने इहेति निपातनात्। प्राकृते च 'त्रपो हित्थे (८।२।१६१)ति सूत्रेण तथाऽऽदेशो 'इत्थे'ति। एषु-प्रस्तुत-गाथावर्णितत्वात् प्रत्यक्षेषु माध्यस्थ्यादिषु यतितव्यं-प्रयत्नः कार्यः। यवक्रयणन्यायेन यत्नकर्त्तव्यतायामापन्नायामपि स्पष्टत्वार्थं स्पष्टो-च्चारः। एवं विधिनाऽवाप्तो भवेत् येन तत्त्वागमस्तस्य कर्त्तव्यतामाह-

रागितादर्शनाय वा । अर्थः-प्रयोजनमौषधादि, तस्य करणं-
धानं, स्वयमिति ज्ञेयमध्याहार्यम् । तथैव विनयशुद्धेः । नह्यन्यपार्श्वे
दर्थविधानं विधेयतयोदितं विधिविद्भिः । न चैवं विधाने भवति
आत्मशुद्धिः । चकारः पूर्वोक्तयोः समुच्चयार्थः । न केवला सेवा
नयो वा केवलः, किन्तु त्रयमप्येतदितिज्ञापनायेत्यर्थः । न केवलं
रिप्रभृतीनां सेवादिकरणं किन्तु साधूनामपि, तदेतदाह-'साहूण'
। साधयन्त्यपवर्गं पौरुषेयीभिः क्रियाभिरिति साधवः ।
निव्वाणसाहए जोए जम्हा साहंति साहुणो' इतिवचनात् । तेषा-
पि 'सेवा विनयस्तदर्थकरणं चे'त्यत्रापि योज्यम्, तेषामपि
चपरमेष्ठ्यन्तर्गतत्वेनाऽऽराध्यतमत्वात् । केन गुणेनाऽऽराधनेति चेत्?
हुः श्रीश्रुतकेवलिपादाः—[॥] 'विसयसुहनियत्ताणं विसुद्धचारित्त-
यमजुत्ताणं । तच्चगुणसाहयाणं सहायकिच्चुज्जयाण नमो ॥१॥
सहाए सहायत्तं करंति मे संजमं करंतस्स । एएण कारणेणं नमामहं
व्वसाहूणं ॥२॥ (आव० नि०)ति । अन्यच्च-पूर्वं गुरुसेवायां
दुपदेशादि महत्फलमुक्तं, तदत्रापि समानमिति न संशयस्तत्सेवादौ
ोग्यतामञ्चति । भवति च तददर्शने तदुपदेशाश्रवणे च नन्दम-
णकारवत् सुदृढस्यापि मिथ्यात्वप्राप्तिरिति करणीयैवैषामपि सेवा ।
'जावज्जीवं सुसाहुणो गुरुणो' इति वाक्येन यावन्महाव्रतवता-
राध्यत्वात् । गुणगुरुगुरूणाम् पृथगुपन्यासश्च तेषामतिशयेनाऽऽरा-

[॥] निर्वाणसाधकान् योगान् यस्मात् साधयन्ति साधवः ।

[॥] विषयसुखनिवृत्तेभ्यः विशुद्धचारित्रनियमयुक्तेभ्यः ।
तथ्यगुणसाधकेभ्यः सहायकृत्योद्यतेभ्यो नमः ॥
असहायान् सहायत्वं कुर्वन्ति मम संयमं कुर्वतः ।
एतेन कारणेन नमाम्यहं सर्वसाधुभ्यः ॥

[॥] यावज्जीवं सुसाधवः गुरवः ।

गुरुजण वंदावेंति सुस्समणं जहुत्तकारिं च ॥१॥ (आव०) न केवलमेत एव न वन्द्याः, तत्संसर्गिणः सुसाधवोऽप्यवन्द्या एव। यदुक्तम्– ❀ असुइट्ठाणे पडिया चंपगमाला न कीरइ सीसे। पासत्थाईठाणेसु वट्टमाणा तह अपुज्जा ॥१॥ (आव०) न च वाच्यं ❀ 'नाणाहिओ वरतरं हीणो विहु पवयणं पभावंतो'। इतिवाक्यात् चरणरहितस्यापि श्रेष्ठतोक्तेर्ज्ञानादिगुणयुक्तानां कार्यैव सपर्येति। तदभिप्रायानवगमात्। तथाविधविशिष्टचारित्रविकलतैवाभिप्रेताऽत्र सूरिमुख्यैः 'हीण' इत्यनेन, न तु चारित्रशून्यता। व्यक्तश्चैष तत्रोत्तरगाथाकदम्बके ❀ 'नाणाहियस्स नाणं पुज्जइ नाणा पवत्तए चरणं। जहा खरो चंदणभारवाही भारस्स भागी न हु चंदणस्स। एवं खु नाणी चरणेण हीणो नाणस्स भागी न हु सोग्गइए ॥१॥ (उप०) अनेनैव ज्ञापयति-यत्पूर्वं पूज्यतोक्ता वरतरशब्देन, सोत्तरगुणाशुद्धिमतो, न तु प्रकटसेवादिना काकनाशं नष्टचारित्ररत्नस्य, तस्य तु सम्यक्त्वस्यापि विनाशोन्मुखत्वात्। तदाह- ❀ 'संपागडपडिसेवी काएसु वएसु जो न उज्जमइ। पवयणपाडणपरमो सम्मत्तं कोमलं तस्स। (उप०) यावद्भणितं पूज्यपादैः– ❀ 'छजीवनिकायदया-

---

❀ अशुचिस्थाने पतिता चंपकमाला न क्रियते शीर्षे।
पार्श्वस्थादिस्थानेषु वर्तमाना तथाऽपूज्याः ॥१॥

❀ ज्ञानाधिको वरतरं हीनोऽपि खु प्रवचनं प्रभावयन्।

❀ ज्ञानाधिकस्य ज्ञानं पूज्यते ज्ञानात् प्रवर्तते चरणम्।
यथा खरः चन्दनभारवाही भारस्य भागी नैव चन्दनस्य।
एवं खु ज्ञानी चरणेन हीनो ज्ञानस्य भागी नैव सुगतेः ॥

❀ संप्रकटप्रतिसेवी कायेषु व्रतेषु यो न उद्यच्छति।
प्रवचनपाटनपरमः सम्यक्त्वं कोमलं तस्य ॥

❀ षड्जीवनिकायदयावर्जितो नैव दीक्षितो न गृही।

जायते । सर्वज्ञभाषितो धर्मस्तस्य चित्ते न विद्यते ॥१॥ न चासंयताविरतेभ्यो यत्किञ्चित्प्रासुकमप्रासुकं वा,एषणीयमनेषणीयं वा दीयते तत्रैकान्तेन पापकर्मबन्ध एव भगवता प्रतिपादितः, न च तत्राल्पापि सम्भवति निर्जरा, ❀ 'एगंते से पावे कम्मे किज्जइ नत्थि से अप्पावि णिज्जरे'ति (भग०) वचनादिति वाच्यम् । तत्र पात्रबुद्धयैव दानविचारस्योपक्रमात् । पात्रबुद्धया चापात्रेभ्यो यत्किञ्चिद्दानेऽपि सर्वथा पापबन्धे को वा किमाह- तस्य मिथ्यात्वरूपत्वात् तत्सम्भवस्याऽनिवार्यत्वात् । न च गम्यते कथमेतत् । प्रकरणं हि तत्र पात्रदानस्य । प्रकरणेनैव च स्यादर्थपरिच्छित्तिः । द्रष्टव्यश्चात्रापि यथाश्रुतव्याख्याने स्याद्वादः, स चापेक्षयैव निर्धारणे भविष्यति, । निर्णीतश्चैषोऽर्थो निर्णयकरणपटुभिः । यतो यदि सर्वथाऽसंयतादिदानं प्रतिपिषित्सितं स्यान्नार्थोऽप्रासुकप्रासुकाऽनेषणीयैषणीयविचारेण, स हि संयतानामेव, कल्पाकल्पविभागभावात्तेषां कुतश्चायं तत्रेति निर्णीयते-नैष सामान्यदानविधिविषय उपन्यासः, किन्तु पात्रबुद्धिविषयः । न च वाच्यं प्रासुकैषणीयं दीयते चेन्न तदा स्यात्पापबन्धः, सूत्रे तस्यापि निषेधात् । अन्यच्च-एकान्तपापबन्धकथनेन हि निषेद्धा स्यादेव वृत्तिच्छेदकारित्वेन दुरन्तपापभाग् । तदुक्तं- ❀'जे य णं पडिसेहंति वित्तिच्छेयं करंति ते (सूत्रकृत०) इतिवचनात् । एतेन ये आहुः-एषणीयमपि दीयतेऽसंयताय पापमेव का वार्त्ताऽनेषणीयदाने ? इति ज्ञापनायेतरोपन्यास इति । ते निरस्ताः । एषणीयशब्देनैव तदभिप्रायस्य गतार्थत्वात् । न च निवारितमनुकम्पादानं जिनवरेन्द्रैः, स्वयमपि तु तदाऽऽचीर्णमेव सांवत्सरिकदान-देवदूष्यदानादिना । पठयते च-

❀ एकान्तः तस्य पापकर्म क्रियते नास्ति तस्य अल्पापि निर्जरा ।
❀ ये च प्रतिषेधयन्ति वृत्तिच्छेदं कुर्वन्ति ते ।

पेधेन षष्ठीसमासाभवनाद् अव्ययीभावस्याऽप्यव्ययत्वात्, किन्तु तत्पुरुषोऽयं रूपमनुगतोऽनुरूपः, शक्तेरनुरूपः शक्त्यनुरूपः । क्रियाविशेषणत्वे चास्य शक्त्यनुरूपमिति । सेवादि हि सेवापरैः स्वशक्तिमनतिवृत्त्यैव कार्यम् । अन्यथाऽऽर्त्तादियोगेन दुर्गदुर्गतिगर्त्तानुसरणात् । अत एव च पूज्यतमपूजाया अवसरनिरूपणायामनियमोऽपि तथाविधानाश्रित्याऽऽख्यातः । यदाहुः श्रीपूज्याः-[1]'सो पुण इह विण्णेओ संज्झाओ तिण्णि ताव ओहेण । वित्तिकिरियाविरुद्धो अहवा जो जस्स जावइओ ॥१॥ यावत् [2] 'वित्तीवोच्छेयंमि य गिहिणो सीज्जंति सव्वकिरियाओ । णिरवेक्खस्स उ जुत्तो संपुण्णो संजमो चेव'त्ति । (पञ्चा०)आस्तां तावदन्यत्, कृतार्थत्वेऽपि परमपथप्रापणप्रवणोपदेशप्रवर्त्तनस्वभावत्वादुत्तमोत्तमश्रीमदर्हत्पूजायामप्याह- [3] वत्थेण बंधिऊणं णासं अहवा जहासमाहीए' इति । भवति च बोटिकवत्स्वशक्त्यतिक्रमेणोद्यच्छन्नवाप्तमिथ्यात्वाद्यनर्थः । अत एव च तीर्थकरनिदानवर्णनेऽपि 'शक्तितस्त्यागतपसी (तत्त्वा०)'इत्याहुः । न चैवमवधार्य निगूहनीया स्वशक्तिः सद्धर्माराधनासावधानैः, तथात्वे वीर्याचारविराधनावधारणात् । तल्लक्षणं तु [4] 'अणिगूहियबलवीरिओ परक्कमइ जो जहुत्तमाउत्तो । जुंजइ य जहाथामं णायव्वो वीरियायारो'॥ (दशवै०) त्ति । न चेदं सेवादिकाम्यानुष्ठा-

---

[1] स पुन इह विज्ञेयः सन्ध्याः तिस्रस्तावदोघेन ।
वृत्तिक्रियाऽविरुद्धः अथवा यो यस्य यावत्कः ॥

[2] वृत्तिव्युच्छेदे च गृहिणः सीदन्ति सर्वक्रियाः ।
निरपेक्षस्य तु युक्तः सम्पूर्णः संयमश्चैव ॥

[3] वस्त्रेण बद्ध्वा नासामथवा यथासमाधि ।

[4] अनिगूहितबलवीर्यः पराक्रमते यो यथोक्तमायुक्तः ।
युनक्ति च यथास्थामं ज्ञातव्यो वीर्याचारः ॥

भव्वस्स चरमपुग्गलवत्तिणो पाय णं परं एयं।
एसो विय लक्खिज्जइ भवविरहफलो इमेणं तु ॥२०॥

भविष्यति मुक्तिभागिति भव्यो–मुक्तेर्योग्यो 'भव्यगेयजन्यरम्यापात्याप्लाव्यं नवे'(५-१-७)ति कर्त्तरि यान्तनिपातः। भव्याभाविनी सिद्धिर्वाऽस्येति भव्यः, 'अभ्रादिभ्य'(७-२-४६) इत्यस्याऽऽकृतिगणत्वेनाप्रत्यये भव्योऽनादिभव्यत्वपारिणामिकभाववान्। आगमिको हि भावोऽयं, नहि हेतुगम्यः। यदाहुर्दिवाकरमिश्राः-[1] "दुविहो धम्मावाओ अहेउवाओ य हेउवाओ य। तत्थ उ अहेउवाओ भविआभविआदयो भाव'॥त्ति। न च भव्यत्वेऽभव्यत्वे वा भवति कश्चिद्धेतुतास्पदम्। ननु सम्यग्दर्शनादिसामग्री या परमसाधनी सा नाऽस्य भाविनीति व्यक्तोऽभव्यत्वे हेतुः। भाविनी चेद्भव्यत्वे, इति-चेत्। न, तस्य हेतुतायां भव्यतायामेव पर्यवसानात् चक्रदोषाऽऽपातात्। न च वाच्यं न भविष्यति शङ्कया प्रवृत्तिर्यतः स्यात् सम्यक् सम्यग्दर्शनादिसम्पत्तिरिति। शङ्काया एव प्रवृत्तिनियामकत्वात्। दृश्यते च कृषिकर्मणि फलसंशयस्यैव प्रवृतिजनकत्वम्। अत्र तु विशेषेण यतो भव्यत्वव्यापिनी भव्याभव्यत्वशङ्केति। तद्भावस्तु तथाभव्यत्वादेव, भव्यत्वपरिपाकश्चाऽकामनिर्जरा-स्वभाव-कालादिभ्यो भवत्येवेत्यलं प्रसङ्गेन। तस्यानादिभव्यत्वलक्षणपारिणामिकभाववत एव। अत्र चैकवचनं जातौ, 'जात्याख्यायां न वैको० (२।२।१२१)'इतिवचनाद्। अनेनाऽभव्य-जातिभव्यव्यवच्छेदमाह। अन्यानां तावत्सम्यक्त्वादिप्राप्तियोग्यत्वे त्रसत्वाऽप्राप्तेर्न तत्प्राप्तिः, सरित्सहस्रश्रोतःस्रवाऽऽवर्त्तितयोजनसहस्रोद्वेधातिशयितोदकभरभ्राजिष्णुपयोधिपातालस्थपाषाणखनिस्थग्रावेव विशिष्टप्रतिमावस्थां

[1] द्विविधो धर्मवाद अहेतुवादश्च हेतुवादश्च। तत्र अहेतुवादो भव्याऽभव्यादयो भावाः॥

परावर्त्तवर्त्तित्वेनैव योग्यताभिधानम् । यदाह- 'स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि । ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुण'।।मिति। तथात्वं चाऽर्वागाऽऽगमवचनापरिणतेः,सद्बोधाभावात् । यदाह- 'नाऽऽगमवचनं तदधः परिणमति सम्यग् नियम एषोऽत्रे'ति सुष्ठूक्तं-'चरमपरावर्त्तवर्त्तिन' इति । तत्रापि न समस्ते, किन्तु तत्प्रान्त्यभागे एव, यतो लब्धसम्यक्त्वस्याप्रतिपातिनो भवाष्टकेनैव सिद्धिगमनात् । प्रतिपातिनोऽपि अपार्धपुद्गलपरावर्तमात्रसंसारावस्थाननियमात् । तदुक्तं- (१) 'अंतोमुहुत्तमित्तंपि फासियं जेहि हुज्ज सम्मत्तं । तेसिमवड्ढपोग्गलपरियट्टो चेव संसारो' ।।१।। इति प्रोचुः- 'प्राय एतत्' इति । न च वाच्यं तर्हि चरमान्त्यत्वेनैवाऽस्तु हेतुता, अन्त्यस्यापि चरमत्वानपायात् । तत्कारणसम्भवसूचनाय चैवं व्यपदेशः । यद्वा–अनन्त्यपुद्गलपरावर्त्तानां भव्यानां मोक्षानर्हाणामभव्यानामपि च द्रव्यतो भवत्येवैतल्लाभसम्भवः । यदाह– 'अभव्यस्यापि कस्यचिद्यथाप्रवृत्तिकरणतो ग्रन्थिमासाद्याऽर्हदादिविभूतिसन्दर्शनतः प्रयोजनान्तरतो वा प्रवर्त्तमानस्य श्रुतसामायिकलाभो भवति । न शेषलाभः-शेषाणां-सम्यक्त्वदेशसर्वविरतिसामायिकानां लाभो नेत्यर्थः । भव्यानप्याश्रित्यैवमेव । अनन्त्यावर्त्तेऽनन्तशः सर्वविरतिलाभस्य द्रव्यतोऽनेकशः पञ्चवस्त्वादौ प्रतिपादितत्वादिति प्रायः । न च द्रव्यभावभेदो लक्ष्यः परेषां । दुर्लक्ष्या हि पराशया इतिवचनात् । णकारश्चात्र वाक्यालङ्कारार्थः । प्रोचिरे च प्रवचनप्रणयनपटुभिर्गणभृद्भिः स्थानाङ्गदशमस्थाने अकारादय आलङ्कारिकाः । प्रोचे च तत्र णकारोपि 'तेणं कालेण'मित्यादिवत् । भवतीति क्रियाध्याहा-

(१) अन्तर्मुहूर्तमात्रमपि स्पर्शितं यैर्भवेत् सम्यक्त्वम् ।
तेषामपार्द्धपुद्गलपरिवर्त एव संसारः ।।

भवविरहफलः । भवत्येव हि धर्माभ्यासातिशयाद् भवविरहो 'मुक्तिविशुद्धो मुक्तये' इति 'अभ्यासातिशयादुक्तं तद्विमुक्तेः प्रसाधकमि'ति च वचनात् । न च मुक्तेः परं फलमन्यदस्ति, शेषस्य सम्पदादेर्विपाकविरसत्वात्, 'सर्वमतोऽन्यद् दुःखकारण'मिति-वचनात् । देवत्वावाप्तिरपि न तत्त्वतः फलभूता, किन्तु स्वार्था-सिद्धौ विश्रामरूपा । तदुक्तं- यस्तु यतिर्घटमानः सम्यक्त्वज्ञान-शीलसम्पन्नः । वीर्यमनिगूहमानः शक्त्यनुरूपं प्रयत्नेन ॥१॥ संहननाऽऽयुर्बलकालवीर्यसम्पत्समाधिवैकल्यात् । कर्मातिगौरवाद्वा स्वार्थमकृत्वोपरममेति ॥२॥ सौधर्मादिष्वन्यतमकेषु सर्वार्थसिद्धि-चरमेषु । स भवति देवो वैमानिको महर्द्धिद्युतिवपुष्कः ॥३॥ तत्र सुरलोकसौख्यं चिरमनुभूय स्थितिक्षयात्तस्मात् । पुनरपि मनुष्य-लोके गुणवत्सु मनुष्यसङ्घेषु ॥४॥ जन्म समवाप्य कुलबन्धुविभ-वरूपबलवुद्धिसम्पन्नः । श्रद्धा-सम्यक्त्व-ज्ञान-संवर-तपोबलसमग्रः ॥५॥ पूर्वोक्तभावनाभावितान्तरात्मा विधूतसंसारः । सेत्स्यति ततः परं वा स्वर्गान्तरितस्त्रिभवभावात् ॥६॥ (प्रशम०) न च साधूनुद्दिश्यै-वाऽयं फललाभः, श्रावकानाश्रित्यापि तथाभणनात् । 'यश्चेह जिनवरमते गृहाश्रमी निश्चितः सुविदितार्थः' इत्यादि यावत् 'शुद्धः स सिद्धिमेष्यति भवाष्टकाभ्यन्तरे नियमात्' । इति । विरह-शब्देन चैतस्य श्रीहरिभद्रसूरिसूत्रितत्वं गम्यते । पूज्यैर्हि यावन्तो विहिताः ग्रन्थाः प्रवचनरत्नाकरावतारतीर्थकल्पाः तावत्सु विरहशब्दो न्यस्तो, येन ज्ञायेरन् प्रकरणबोद्धृभिः श्रीपूज्यकृतिरेषा इति । केनैवं लक्ष्यते ? इति चेदाह- 'अनेन तु' । तुरवधारणे । अनेनैव तत्त्वज्ञानगुणगुरुसेवादिनैव । नान्यन्निमित्ति । तस्य तथात्वलक्षणेन चेदं व्यभिचारि । भवति चाव्यभिचारिणा साधनेनाऽप्रत्यक्षोऽपि तदविना-भाव्यर्थो निश्चित इति सुष्ठूक्तमनेनैव भवविरहफलो लक्ष्यते

यैरुद्धृतं विगतवस्त्रगणात्सुतीर्थम् ।

(नग्नाटविघ्ननिचयादवितं सुतीर्थम्) वित्तं च कौङ्कुममिदं जगति प्रभावा-त्तीर्थप्रभावननभोङ्गणसूर्यकल्पान् ।.७।।

इतश्च कार्पटे द्रङ्गे मग्ना-भिख्या धनेश्वराः । न रमायां न रामायां, मग्नाः किन्त्वाऽर्हतोदितौ ।।१।। आवाल्याद्विपयोद्विग्ना आग्रहात्परिणिन्यिरे । पित्रुद्वेगनिरासाय, महत्सेवापदं हि तत् ।।२।। न च कस्तूरिकामोदः, प्रच्छन्नस्तिष्ठति क्वचित् । धर्मरङ्गोऽपि तत्तेषां, क्षेत्रं नासोढ नांशितुम् ।।३।। * जयवीरोदितिसुधा-मग्नैस्तैर्विपयाः समे । विपवज्जज्ञिरे नाक्ताः, भावै रामाकृतैस्तके ।।४।। उद्वेग-परिहारायाऽवात्सुस्ते तत्समीपगाः । रामासङ्गो महर्षीणा-मपि स्याद्भूवकृन्न किम् ।।५।। ऊपुस्ते द्रव्यतो गेहे, परिव्रज्यामनोरथाः । यमुनां यमुनाकान्तां, पूर्णपुत्रमनोरथाम् ।।६।। अवेक्ष्य भवनिर्विण्णाश्चित्तं चक्रुर्व्रतादृतौ । नाऽभुक्तं क्षीयते कर्मेत्यस्थुर्गेहेपु दुःखिताः ।।७।। अन्तर्वत्नीं पुनः प्रेक्ष्य यमुनां प्रत्यबोधयन् । संसारविषपूर्णाब्धि-मग्नाः खिद्यन्ति हाऽङ्गिनः ।।८।। चित्रं नराः पशुक्रीडां, कृत्वा नन्दन्ति मानसे । आनन्दो दारुणो भावी, प्राणिव्रातप्रबाधनः ।।९।। बुबोध यमुना मौनं, धर्ममाचष्ट न क्षमा । विधातुं तत् समादास्ये शीलं व्रतपदं लघु ।।१०।। अग्रहीषुस्तया साकं, दधतो व्रतभावनाः । कुक्षिगोऽजनि धौरेय-स्वप्नसूचितसत्त्वभाक् ।।११।। नन्दनो नन्दनो लोक-लोचनस्येति नन्दितौ । चक्रतुर्हेमचन्द्राऽऽख्यां, पितरौ मोदगर्वितौ ।।१२।। आद्यस्य गुणरत्नाब्धेः, स्वप्नलाभानुसारतः । कृताख्या मणिवद्दीप्रगुणस्यास्ति मणिः पुनः ।।१३।। अधीतिनौ समे शास्त्रे, तर्कबुद्धया विदांवरौ । कन्यावूढौ योग्ये हि, योग्यं वयसि शोभते ।।१४।। तावीक्षयित्वा विष्णुहलिनाविव सङ्गतौ ।

* जहाँ खेरसागर इति

# । मूर्त्तिस्थापनम् ।

ज्ञानाऽऽवृतेः साधनमाह सार्वः, ज्ञानस्य तद्वारयतस्तथैव ।
तत्साधनानामपलापितादिना, सम्यग्दृशः सञ्चरणेऽपि तद्वत् ॥१॥
अत्राऽवुधा वेपमृपेर्दधानाः, श्रद्धालुताभावविहीनधर्माः ।
भवानुरक्ताः जडताऽऽढ्यचित्ताः, स्वकीयपूजाप्रवर ाविचख्युः ॥२॥
अस्माकमाशातनया हि भाव्यं, यदि स्पृशेदङ्घ्रिरिहासनादि ।
न पुस्तकादेर्न च सार्वमूर्त्तेः, पदप्रघट्टे किमपीह दूषणम् ॥३॥
श्रीपञ्चमाङ्गे गणधारिभिर्नता, श्रुतस्य साध्याङ्गतया लिपीयम् ।
तथापि मोहो वलवान् ह्यमीषां, तमो यथा कौशिकगोत्रजानाम् ॥४॥
दिवस्पतिः स्वस्य सभाप्रदेशे, न क्रीडते यत् स्वसुराङ्गनाभिः ।
तं पुण्यकर्मस्थ्यतुलप्रभावं, प्रेक्षेत मूढः कथमार्त्तभावः ॥५॥
अस्थ्नां करोत्यात्महिताय सेवां, शान्तार्णवो यत्र परत्र लभ्याः ।
मूर्त्तित्रयं सर्वजनप्रणम्यं, चक्रुः सुरास्तीर्थकरस्वभावम् ॥६॥
प्रणम्य तं योगिमुखा निषेदुः, स्थाने स्वकीयेऽग्रत एव तासाम् ।
सद्दृष्टिराद्यो गणभृच्च तुर्यो, जातोऽत एवेति सदा प्रणम्या ॥७॥
आशातनां यस्त्यजति त्रयाणां, तत्साधनानां च तनोति भक्तिम् ।
भवेत् स ऐश्वर्यमवाप्य सिद्ध, आनन्दपाथोधिसमावतारः ॥८॥
कल्लोललोले नरजीविते पुमान्, लब्धे न रत्नत्रितयं चिनोति यः ।
समर्जितानेककठोरकर्मा, कथं पुनस्तस्य मुदब्धियोगः ? ॥९॥

